॥ श्री ॥

# प्रयोगचन्द्रिका

श्रीमन्नैध्रुवकाश्यपान्वयजनुषा
श्रीवीरराघवसूरिणा प्रणीता

श्रीनिवासाचार्यविरचितया

## अनुक्रमणिकया

सहिता

एन्. एस्. रामानुजताताचार्येण सम्पादिता

श्रीसत्यसायिमुद्रणालये मुद्रापिता
प्रकाशिता च ।

1989

# भूमिका

गौतमप्रणीतधर्मसूत्रेषु प्रथमप्रश्ने अष्टमेऽध्याये—राजा ब्राह्मणश्च द्वौ दण्डोपदेशाभ्यां सर्वस्य धारयितारौ। मनुष्यस्थावरपशुपक्षिसरीसृपादीनां जीवनं तदुभयायत्तम्। न केवलं जीवनम्, अभिवृद्धिः रक्षणमित्यादिकमपि तदधीनम्। तत्र ब्राह्मणः लोकव्यवहारवेदवेदाङ्गवाकोवाक्येतिहासपुराणेषु कुशलः तदुक्तकर्मानुष्ठाता चत्वारिंशत्संस्कारैः संस्कृतः इज्याध्ययनदानेषु त्रिषु इज्याध्ययनदानप्रतिग्रह याजनाध्यापनेषु षट्सु वा कर्मसु अभिरतः स्मार्तधर्मेषु शिक्षितः स्यात् इत्युक्तम्।

ततः गर्भधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि, चत्वारि वेदव्रतानि, स्नानम्, विवाहः, पञ्चमहायज्ञानुष्ठानम्, अष्टका पार्वणः श्राद्धम् श्रावण्याग्रहायणी चैत्री आश्वयुजी इति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयम् अग्निहोत्रम् दर्शपूर्णमासौ आग्रयणम् चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणी इति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमः अत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयः अतिरात्रः अप्तोर्यामः इति सप्तसोमसंस्थाः इत्येवं संस्काराश्चत्वारिंशत् इत्युक्तम्।

एतेषां संस्काराणामनुष्ठानक्रमस्य बोधका ग्रन्थाः प्रयोगग्रन्थाः इत्युच्यन्ते। तेषां साहाय्येनैव पुरोहिताः अनुष्ठानं कारयन्ति स्वयं चानुतिष्ठन्ति। तेषु चत्वारिंशतः संस्काराणाम् अनुष्ठाने अशक्ताः प्रायः गर्भाधानपुंसवनसीमन्तजातकर्मनामकरणान्नप्राशनचौलोपनयनवेदव्रतस्नानविवाहपञ्चमहायज्ञपाकयज्ञसंस्थाः अनुतिष्ठन्ति। तेष्वपि कतिपयसंस्कारान् अशक्त्या केचित् वर्जयन्ति। अतः प्रायः सर्वैरनुष्ठीयमानानां संस्काराणां तदुपयोगिकर्मणां च

अनुष्ठानक्रमबोधकः विशिष्य श्रीवैष्णवैः आद्रियमाणः प्रयोगचन्द्रिकाख्यः ग्रन्थः प्रसिद्धः। अयं ग्रन्थः नैध्रुवकाश्यपान्वयश्रीनिवासाचार्यसूनुना वीरराघवाचार्येण विरचितः। प्रयोगचन्द्रिकायाः अतिसंक्षिप्तत्वात् तत्र पूर्णतया मन्त्राणामनिर्देशाच्च स्पष्टप्रतिपत्त्यर्थं प्रयोगचन्द्रिकानुसारी समन्त्रकानुक्रमणिकाग्रन्थः चन्द्रिकाकृद्भागिनेयपुत्रेण वङ्गीपुरवंश्येन रामानुजदीक्षितसूनुना श्रीनिवासाचार्येण विरचितः।

इयम् अनुक्रमणिकासहिता प्रयोगचन्द्रिका सर्वोपकारिका सप्ततिवर्षेभ्यः प्राक् ग्रन्थलिप्यां मुद्रापिता बहुकालात् प्रागेव दुर्लभाभूत्। देवनागरलिप्यामथ यावत् न मुद्रापिता च। अतः ग्रन्थदौर्लभ्यं देवनागरलिप्यां मुद्रणाभावेन बहूनां क्लेशं च अपगमयितुम् इदानीं देवनागरलिप्याम् इदम्प्रथमतया मुद्राप्यते।

संकल्पोऽयं डि. टि. तताचार्य इति प्रख्यातानां दिवंगतानां पण्डितराजानां विंशतिवर्षेभ्यः पूर्वमेवासीत्। नावल्पाकाग्रहारनिवासिनं पण्डितवर्यं ना.गो. रामानुजाचार्यं नियुज्य तद्द्वारा देवनागरलिप्यां प्रतिलिपिमपि समपादयन्। सैव प्रतिलिपिः मुद्रणार्थमस्माभिः स्वीकृता। मुद्रणार्थद्रव्यसाहाय्यार्थं देवस्थानाधिकारिणः प्रार्थिताः तैश्च साहाय्यमनुमतम्। तदनन्तरं सत्यसायिमुद्रणालये ग्रन्थः दत्तः। त्रिंशत्पृष्ठमुद्रणानन्तरं मन्त्राणां सस्वरं मुद्रणं साधु स्यादिति मत्वा स्वरचिह्नादिकं निवेश्य पुनर्दत्तः। परं तु मुद्रणालये चिह्नाभावात् यन्त्रसौलभ्याभावाच्च तदधिकारी नान्वमन्यत। इयमत्र न्यूनता पूर्वसमालोचनविरहात् अपरिहार्या संवृत्ता। अथापि देवनागरलिप्यां मुद्रणं जातमिति सर्वे संतुष्येयुरिति विश्वसिमि। कालानुसारेण देवनागरलिप्यां मुद्रणेऽपि क्लेशो जायते। बहवो मुद्रणालयाः पिहिताश्च। अतः तिरुपतिस्थसत्यसायिमुद्रणालये मुद्रणव्यवस्था कृता। तत्राप्यक्षराणि भग्नानि सन्ति, समर्थः कर्मकरोऽपि नास्ति। अत एवाशुद्धयः समापतिताः। शुद्धाशुद्धपट्टिका अन्ते निवेशिता। तदनुसारेण

तत्र तत्र पृष्ठे शोधनं कृत्वा ग्रन्थमिममुपयुञ्जतामिति सर्वानहं प्रार्थये।

द्रविणसाहाय्यमुपकल्पितवद्भ्यः तिरुमलतिरुपतिदेवस्थानाधिकारिभ्यः, देवनागरलिप्यां प्रतिलिपिं कृतवद्भ्यः एन्. रामानुजाचार्येभ्यः अपेक्षितं शोधनं कृतवद्भ्यः वी. आर्. वेंकटदीक्षितमहाशयेभ्यः सत्यसायिमुद्रणालयाधिकारिभ्यश्च कृतज्ञतां निवेदयामि। स्वर्गस्थाः डि. टि ताताचार्यस्वामिनः एतन्मुद्रणेन संतुष्टाः स्युः ये किल ग्रन्थस्यास्य देवनागर्यां मुद्रणं प्रथमतः समकल्पयन्।

तिरुपति
24-10-1989

विद्वज्जनविधेयः
एन्. एस्. रामानुजताताचार्यः

# प्रयोगचन्द्रिकायाः

## विषयसूची



—0—

# अनुक्रमणिकाया:

## विषयसूची



—o—

श्रीरस्तु

श्रीमते हयग्रीवाय नमः ।

# । प्रयोगचन्द्रिका ।

श्रीनिवासगुरुं नत्वा सीतारामं च सानुजम् ।
प्रयोगचन्द्रिकां तेषां करोमि कृपयाधुना ॥



## प्रतिज्ञा

श्रियःपतिं भूमिनीलासमेतं प्रणम्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनव्रतसमावर्तनोद्वाहगृहप्रवेशानां तत्रतत्रोपयोगिनां अन्येषां उदकशान्त्यादीनां प्रयोगं वक्ष्ये ॥

## अथ परिभाषा

सर्वत्र कर्मादौ स्नातः शुद्धवस्त्रधरो धृतोर्ध्वपुण्ड्रः सोत्तरीयः बद्धशिखः पादौ प्रक्षाल्य द्विराचम्य ब्राह्मणैरनुज्ञातः प्रागग्रेषु दर्भेषु प्राङ्मुख उपविश्य भगवन्तं ध्यात्वा करिष्यमाणस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं सपरिवारं विष्वक्सेनं आवाह्य आसनादिभिर्नैवेद्यवीटिकान्तैः अभ्यर्च्य त्रिः प्राणानायम्य हरिरोमित्युपक्रम्य गोविन्दं त्रिः सङ्कीर्त्य दक्षिणे जानुनि दक्षिणोत्तरौ पाणी

कुर्यात्, तत्र च सव्यस्य पाणेः अङ्गुष्ठतर्जनीमध्ये दक्षिणस्य पाणेः अङ्गुष्ठवर्जिताः चतस्रोऽङ्गुलीः कृत्वा सव्याङ्गुष्ठं दक्षिणाङ्गुष्ठेन आवेष्ट्य अस्येत्याद्युच्चार्य संवत्सरायनर्तुमासपक्षतिथिवारनक्षत्रयोगकरणानि उक्त्वा श्रीभगवदाज्ञया भगवत्प्रीत्यर्थं भगवत्कैङ्कर्यरूपं करिष्यमाणं कर्म सङ्कल्प्य बलमन्त्रमनुसन्धाय भगवानेव मयैतत् कर्म कारयतीतिबुद्ध्या कर्म कृत्वा अन्ते भगवदर्पणं कुर्यात्, भगवान्........स्वशेषतैकरसेन मयेति मन्त्रद्वयं कर्मणां आदावन्ते च क्रमेणानुसन्दध्यात्, क्रियाफलस्यात्मगामित्वे करिष्य इति सङ्कल्पयेत्, उद्वाहकर्म करिष्य इत्यादि ।- अन्यगामित्वे करिष्यामीति–जातकर्मणा संस्करिष्यामीत्यादि । क्वचित् चोदनानुसारेण सङ्कल्पयेत्, नाम धास्यावहे उपनेष्ये, समिध आधास्यामीत्यादि । जातकर्मादीनां स्वस्वकालेषु अकरणे प्राजापत्यकृच्छ्रं कृत्वा लौकिकाग्निं प्रतिष्ठाप्य परिस्तीर्य आज्यं दर्वीं च संस्कृत्य परिषिच्य व्यस्ताभिः समस्ताभिः "पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा । पाहि नो अग्न एकया पाह्युत द्वितीयया पाह्यूर्जं तृतीयया पाहि गीर्भिस्तिसृभिः ऊर्जां पते पाहि चतसृभिः वसो स्वाहा" इति पाहिपञ्चकेन, पुनः व्यस्ताभिः समस्ताभिः व्याहृतिभिः इति एतैः पाहित्रयोदशकैः, त्वं नो अग्ने, स त्वनो अग्ने, त्वमग्ने अयासि, उदुत्तमं, येतेशतं, इत्येतैश्च हुत्वा सर्वप्रायश्चित्तं अनाज्ञातादिभिश्च हुत्वा परिषिच्य अतीतं कर्म कृत्वा तात्कालिकं कर्म कुर्यात् ॥ प्रायश्चित्तस्य सर्वस्य प्रतिनिमित्तमावृत्तिः । पुंसवनसीमन्ताकरणे स्त्रियां प्रसूतायां प्राजापत्यकृच्छ्रं पाहित्रयोदशकहोमं कृत्वा तस्या अङ्के शिशुं निधाय पुंसवनं सीमन्तं च कुर्यात् । गर्भिण्या स्त्रिया भर्तरि देशान्तरं लोकान्तरं वा गते पतिते वा तस्याः

पिता भ्राता वा अन्यो बन्धुः श्रोत्रियागारादाहृतेऽग्नौ पुंसवनं सीमन्तं च कुर्यात्। अन्नप्राशनचौलोपनयनोद्वाहेषु अङ्कुरार्पणं, एतेषु पुंसवनसीमन्तयोश्च प्रतिसरबन्धं, सीमन्तान्नप्राशनचौलोपनयनेषु अभ्युदयं पुण्याहवाचनं चादौ गर्भाधानपुंसवनजातकर्मनामकरणोपाकर्मव्रतसमावर्तनोद्वाहगृहप्रवेशेषु अन्ते अभ्युदयं पुण्याहवाचनं च कुर्यात्। त्रयोः बहूनां वा कर्मणां सहकरणे अङ्कुरादीनि सकृदेव कुर्यात। प्रवृत्तकर्मादौ मध्ये अन्यथा कृतं चेत् यतःअन्यथाकृतं तत आरभ्य यथावत् कुर्यात। एकदेशान्यथाकरणे तावदेव यथावत् कुर्यात्। प्रधानविस्मरणे साङ्गं पुनः कुर्यात्। अङ्गविस्मरणे सर्वप्रायश्चित्तं जुहुयात, 'इदं विष्णु''रिति मन्त्रं वा जपेत्। सर्वत्र वाग्यमनादिनियमलोपे एतमेव मन्त्रं जपेत्॥

आधाने चोदितेन स्वाहाकारो होमद्रव्यानुक्तौ आज्येन जुहुयात्। सर्वत्र गव्यं प्रशस्तम्। तदभावे माहिषं, तदभावे आजं, तदभावे तैलम्। मन्त्राज्ञाने प्रणवो व्याहृतिर्वा। मुख्यद्रव्याभावे रूपेण, वर्णेन, क्षीरेण, पुष्पेण फलेन, गन्धेन वा तत्सदृशम्। पूर्वपूर्वाभावे परं परं ग्राह्यम्। पालाशखादिराश्वत्थोदुम्बरवैकङ्कतबिल्वशम्यर्कवेतसापामार्गदर्भाः पूर्वपूर्वाभावे पराः पराः प्रादेशमात्राः सत्वचः कीटवर्जिताः असुषिराः अवक्राः परस्पराः समिधो ग्राह्याः। जीर्णाः स्वयंपतिताश्च समिधो वर्जयेत्। क्रयक्रीतैः शूद्राहृतैः वा समिद्दर्भादिभिः कर्म कुर्वन् पतितः स्यात्। माषस्थूलाः चतुरङ्गुलदीर्घधाराः आज्याहुतयः। आर्द्रामलकमात्रा अन्नाहुतयः। द्वादशपर्वपूरिताः पाण्याहुतयश्च कार्याः॥

॥ इति प्रयोगचन्द्रिकायां प्रथमः खण्डः ॥

## अथोदकशान्तिः

गर्भाधानादिषु पूर्वेद्युः उदकशान्तिजपकर्म करिष्य इति सङ्कल्प्य गोमयेन चतुरश्रमुपलिप्य तत्र "ब्रह्मजज्ञान"मिति मध्ये, "नाके सुपर्ण"मिति दक्षिणतः, "आप्यायस्वेत्यु"-त्तरनः प्राचीस्तिस्रो रेखाः "यो रुद्रो अग्नौ" इति मध्ये, "इदं विष्णुरिति पश्चात्, "इन्द्रं विश्वा अवीवृधन्" इति पुरस्तात् उदीचीः तिस्रो रेखा विलिख्य अद्भिरवोक्ष्य व्रीहीन् तत्र निक्षिप्य तत्र "ब्रह्मजज्ञानं"मिति कुम्भं निधाय तस्मिन् गायत्र्या तिरःपवित्रं निधाय "आपो वा इदं सर्वं" इत्यद्भिरापूर्य ऊर्ध्वाग्रं कूर्चं निधाय "भूर्भुवस्सुवरों" इति अक्षतां निक्षिप्य गन्धपुष्पैरलङ्कृत्य दूर्वापुष्पफलैः अवकीर्य दूर्वादर्भैः प्रच्छाद्य "शन्नो देवी"रित्यभिमृश्य चतुर्दिक्षु आसनेषु निषण्णैः चतुर्भिः ब्राह्मणैस्सह कुम्भमन्वारभ्य गायत्रीं पच्छोऽर्धर्चशोऽनवानं उक्त्वा वेदादीन् जपित्वा "कृणुष्वपाज" इत्यनुवाकं "मदेचिदस्य" इत्यर्धर्चं अपोह्य "इन्द्रं वो विश्वतस्परि हवामहे" इत्यनुवाकं "यत इन्द्र" "स्वस्तिदा" "महाँ इन्द्रो वज्रबाहुः" "सजोषा" इति चतसृभिः, "येदेवाः पुरस्सदः" इति पञ्च, "अग्नये रक्षोघ्ने" इति पञ्च "अग्निरायुष्मान्" इति पञ्च, "यावामिन्द्रावरुणे"ति चतुरः, "यो वामिन्द्रावरुणा" इत्यष्टौ पर्यायान्, "अग्ने यशस्विन्" इति चतस्रः, ऋताषाडिति सानुषङ्गं अनुवाकं, "नमो अस्तु सर्पेभ्यः" इति चतस्रः, "अयं पुरो हरिकेश" इति पञ्चपर्यायान्, "आशुश्शिशानः" "शंचमे", "ममाग्ने," "अग्नेर्मन्वे," इत्यनुवाकान्, "समीची नाम" इति षट्पर्यायान्, "हेतयो नामस्थ" इति षट्पर्यायान् "शतायुधाय" इति पञ्च, "भूतं भव्यं भविष्यत्" "इन्द्रो

दधीचो अस्थभिः" इत्यनुवाकौ "चक्षुषो हेत" इत्यारभ्य "भ्रातृव्यं पातयामसि" इत्यन्तं, "प्राणो रक्षति", "सिंहे व्याघ्रे" "अहमस्मि", "तासूर्या चन्द्रमसा," "अग्निर्नःपातु", "ऋध्याःस्म", "नवोनवो भवति" इत्यनुवाकान् "अग्नये स्वाहा कृतिकाभ्यः स्वाहा", इत्याद्युपहोमान्, "दधिक्राव्णो-इत्यृच, "आपो हिष्ठा मयोभुव" इति तिस्रः, "उदुत्तमं वरुण", "अस्तभ्नाद्यां" "यत्किंचेदं," "कितवासो", "अवते हेडः", "तत्वायामि" इति वरुणसूक्तं "हिरण्यवर्णाः", "पवमानः", "तच्छंयोः" इत्यनुवाकान्, "यो ब्रह्म ब्रह्मण" इति घृतसूक्तं च जपित्वा, "नमो ब्रह्मण" इति परिधानीयां त्रिः जपित्वा प्रणवेन कुम्भं उत्थाप्य "देवस्य" इत्यादिव्याहृतिभिश्च यजमानं प्रोक्षयेत्। अथ यजमानः पुरस्तादुपविशते, हिरण्यं दक्षिणत उपविशते, रजतं पश्चादुपविशते, कांस्यमुत्तरत उपविशते वासश्च दक्षिणां दत्वा कुम्भजलेन स्नायात्॥

॥ इति प्रयोगचन्द्रिकायां द्वितीयः खण्डः ॥

## अथाङ्कुरार्पणम्

सौरे चान्द्रे वा यस्मिन् मासि उत्सवात्पूर्वं अयुग्मेऽहनि कुर्यात्। उद्वाहे तु रात्रौ तैजसीः मृण्मयीर्वा पञ्चपालिकाः सम्मृज्य तासां मूले दूर्वाश्वत्थशिरीषबिल्वपत्राणि बद्ध्वा श्वेतसूत्रेणावेष्ट्य शुद्धाभिः मृद्भिरापूर्य शुचौ देशे गोमयोपलिप्ते निधाय अमुकगोत्रस्य अमुकशर्मणः कुमारस्य अमुककर्माङ्गं अङ्कुरार्पणकर्म करिष्यामि इति संकल्प्य तदङ्गं पुण्याहं सङ्कल्प्य पुण्याहं वाचयित्वा

तेन जलेन कूर्चेन व्याहृतिभिः पालिकाः प्रोक्ष्य मध्यमायां पालिकायां "ओं भूः ब्रह्माणमावाहयामि, "ओं भुवः प्रजापतिमावाहयामि, "ओं सुवः" हिरण्यगर्भमावाहयामि, "ओं भूर्भुवस्सुवः" चतुर्मुखमावाहयामि इत्यावाह्य। एवमेव प्राच्यां इन्द्रं, वज्रिणं, शचीपतिं, शतक्रतुं, एवमेव दक्षिणस्यां यमं, वैवस्वतं, धर्मराजं, पितृपतिं, एवं प्रतीच्यां वरुणं प्रचेतसं सुरूपिणं, अपांपतिं, एवमेवोत्तरस्यां सोमं, इन्दुं, निशाकरं ओषधीशं च आवाह्य ब्रह्मादीनां क्रमेण आसनार्घ्यपाद्याचमनीयानि दत्वा "आपोहिष्ठामयोभुवः" इति तिसृभिः, "हिरण्यवर्णाः शुचयः पावकाः इति चतसृभिः, "पवमानस्सुवर्जनः" इत्येतेन अनुवाकेन स्नापयित्वा आचमनवस्त्रोत्तरीयाचमनयज्ञोपवीताचमनगन्धपुष्पधूपाचमननैवेद्यताम्बूलादीनि दत्वा उत्थाप्य—

> दिशां पतीन् नमस्यामि सर्वकामफलप्रदान्।
> कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम ॥

इति ब्रह्मादीन् उपस्थाय, व्रीहियवमुद्गतिलमाषसर्षपान् पात्रे संसृज्य क्षीरेण प्रक्षाल्य, "याजाता" इत्यनुवाकेन अभिमन्त्र्य "ब्रह्मजज्ञानं"- "पिता विराजां" इति द्वाभ्यां मध्यमपालिकायां, "यत इन्द्र" "स्वस्तिदा" इति द्वाभ्यां प्राच्यां, "योऽस्य कौष्ठ्यमज्ञाय—इति द्वाभ्यां दक्षिणस्यां, "इमं मे वरुण", "तत्त्वा यामि", इति प्रतीच्यां, "सोमो धेनुं" "आप्यायस्व" इति द्वाभ्यां उत्तरस्यां व्रीह्यादीन् उप्त्वा शुद्धाभिः मृद्भिः प्रच्छाद्य पञ्चगव्येन सिक्त्वा प्रणवेनाभिमन्त्र्य सुरक्षितं कृत्वा प्रतिदिनं सम्पूज्य समाप्ते कर्मणि सप्रणवव्याहृतिभिः तैरेव नामभिः देवता उद्वासयेत्।

॥ इति प्रयोगचन्द्रिकायां तृतीयः खण्डः ॥

## प्रतिसरः

शुचौ देशे गोमयेन उपलिप्ते तण्डुलपूर्णं पात्रं निधाय तदुपरि उल्लेखनादिदर्भप्रच्छादनान्तं पूर्ववत् कृत्वा कुम्भस्योत्तरतो नवगुणितं गन्धोपलिप्तं कार्पाससूत्रं भस्महरिद्राचूर्णगोरजस्सु अन्यतमं च निधाय अमुकगोत्रस्य अमुकशर्मणः कुमारस्य अमुककर्माङ्गं प्रतिसरबन्धकर्म करिष्यामि इति सङ्कल्प्य पूर्ववत् चतुर्भिः ब्राह्मणैःसह गायत्रीं वेदादीन् जपित्वा "दधिक्राव्ण्ण" इत्यृचं "आपोहिष्ठा मयोभुव" इति तिस्रः, "हिरण्यवर्णाश्शुचयः-पावका" इति चतस्रः, "पवमानस्सुवर्जनः" "कृणुष्वपाज" इत्यनुवाकौ "अग्ने यशस्विन्" इति चतस्रः, "उदुत्तममित्यादिवरुणसूक्तं" "परिणो रुद्रस्य हेतिः "स्तुहि श्रुतं मीढुष्टमे," "अर्हन् विभर्षि," "त्वमग्ने रुद्रः," "आवो राजानं" इति रुद्रसूक्तं, "ब्रह्मजज्ञानमित्यादि" "ब्रह्मसमिद्भवत्याहुतीनां" इत्यन्तं ब्रह्मसूक्तं, "विष्णोर्नुकं," "तदस्य प्रियं", "प्रतद्विष्णुः," "परो मात्रया", "विचक्रमे", "त्रिर्देवः" इति विष्णुसूक्तं, "जातवेदसे सुनवामसोम"मिति पञ्च "हिरण्यवर्णां हरिणी"मिति पञ्चदशर्चं श्रीसूक्तं जपित्वा "नमो ब्रह्मणे" इति परिधानीयां त्रिः जपित्वा प्रणवेन उत्थाप्य कूर्चेन व्याहृतिभिः प्रतिसरसूत्रं प्रोक्ष्य वामहस्तेन सूत्रं गृहीत्वा दक्षिणहस्तेन "त्र्यम्बकं यजामहे" इति वासुकिं ध्यात्वा हरिद्रादिना त्रिः उन्मृज्य "अग्निरायुष्मा"-निति पञ्चभिः तण्डुलपूर्णं दक्षिणहस्तं गृहीत्वा "बृहत्साम"ति बध्वा उक्त-सूक्तेनाभिमृशेत् । विवाहाधानयोस्तु "विशेताते"ति पुंसां दक्षिणहस्ते, "बृहत्सामे"ति स्त्रिया वामहस्ते बध्नीयात्, उत्सवान्ते सायं सन्ध्यायां बन्धनमात्रेण विस्रस्य परित्यजेत् ।

॥ इति प्रयोगचन्द्रिकायां चतुर्थ खण्डः ॥

## " अथाभ्युदयश्राद्धम् "

यस्यादौ विहितं तत्र प्रातःकाले कृत्वा अनन्तरं कर्म कुर्यात् । यत्र अन्ते विहितं तत्र पूर्वं कर्म कृत्वा परेद्युः प्रातःकाले कुर्यात् । तत्रोपवीती प्राङ्मुखो दक्षिणं जान्वाच्य प्रागग्रैः ऋजुभिः युग्मैः दर्भैः तिलार्थे यवैः देवतीर्थेन प्रदक्षिणं सर्वं कुर्यात् । सङ्कल्पावाहनादौ नान्दीमुखशब्देन पितरो विशेष्याः वसुसत्याख्या विश्वदेवाः अमुकगोत्रस्य अमुकशर्मणः आमुककर्माङ्गं अभ्युदयश्राद्धं करिष्यामीति सङ्कल्प्य पार्वणवत् अग्निमुखान्ते वर्गत्रयपितॄन् आवाह्य वर्गत्रयपितृभ्यो जुहुयात् । वरणे तु प्रतिवर्गं विश्वेदेवार्थं द्वौ द्वौ, विप्रौ, मात्रादीनां मातामहादीनां च नवानां एकैकस्य द्वौ द्वौ, विष्ण्वर्थं एकं एवं पञ्चविंशतिब्राह्मणान् वृणुयात् । द्रव्यस्य ब्राह्मणस्य वा अभावे वर्गद्वयस्य विश्वेदेवार्थे द्वौ, प्रतिवर्गं द्वौ द्वौ, विष्ण्वर्थं एकं, एवं नव ब्राह्मणान् वृणुयात् । "मधु वाता" इत्यृचां स्थाने "उपास्मै गायतानरः" इति मधुमतीः पञ्च श्रावयेत् । पिण्डप्रदानेषु चतुर्धा प्रागग्रान् दर्भान् संस्तीर्य तेषु पृषदाज्यबदरीफलमिश्रान् चतुर्विंशतिपिण्डान् एकैकस्य द्वौ द्वौ पिण्डौ दद्यात् । अन्यत् सर्वं पार्वणवत् कुर्यात् । एवं मुख्यकल्पस्य असम्भवे द्विगुणेन तण्डुलेन आमश्राद्धं कुर्यात् । अथ अभ्युदयश्राद्धं आमरूपेण हिरण्यरूपेण वा करिष्यामि इति सङ्कल्प्य, वरणादि गन्धदानादि च कृत्वा ब्राह्मणानां पुरतः अन्नश्राद्धचतुर्गुणं हिरण्यं निधाय "यज्ञेश्वरो हव्य" "एको विष्णु"रिति मन्त्रद्वयं उच्चार्य अनेन हिरण्यरूपेण अभ्युदयश्राद्धेन वसुसत्याख्यविश्वेदेवरूपी, नान्दीमुखमातृपितामहीप्रपितामहीरूपी, नान्दीमुखपितृपितामहप्रपितामहरूपी, नान्दीश्राद्धसंरक्षकश्रीमहाविष्णुस्वरूपी, भगवान् जनार्दनः प्रीयतामिति यवोदकं उत्सृज्य ताम्बूलदक्षिणादानानि कुर्यात् ॥

# अथ पुण्याहम्

शुचौ देशे प्रागग्रान् दर्भान् संस्तीर्य तेषु कुम्भं निधाय व्याहृतिभिर्द्भिरापूर्य ऊर्ध्वाग्रं कूर्चं निक्षिप्य गन्धादिभिरभ्यर्च्य दर्भैः प्रच्छाद्य अमुकगोत्रस्य अमुकशर्मणः अमुककर्माङ्गं पुण्याहं वाचयिष्ये इति सङ्कल्प्य चतुरो ब्राह्मणान् भोजयित्वा तण्डुलं वा दत्वा तैः दर्भहस्तैः पुण्याहं वाचयेत् । अञ्जलिं कृत्वा मनस्समाधीयतामिति ब्राह्मणान् सम्पूज्य समाहितमनसः स्म इति तैः प्रत्युक्ते प्रसीदन्तु भवन्त इति प्रार्थ्य प्रसन्नास्स्म इति प्रत्युक्ते भवद्भिरनुज्ञातः पुण्याहं वाचयिष्य इति अनुज्ञाप्य ओं वाच्यतामिति तैरनुज्ञातः उदकुम्भं सव्ये हस्ते निधाय दक्षिणहस्तेन पिधाय कर्मणः पुण्याहं भवन्तो ब्रुवन्तु, पुण्याहं कर्मणोऽस्तु, कर्मणे स्वस्ति भवन्तो ब्रुवन्तु, स्वस्ति कर्मणेऽस्तु, कर्मणे ऋद्धिं भवन्तो ब्रुवन्तु कर्म ऋद्ध्यतामिति त्रिः त्रिः प्रार्थनाप्रतिवचने कुर्युः । अथ पुण्याहसमृद्धिरस्तु, शिवं कर्मास्तु, प्रजापतिः प्रीयतामित्युक्ते अस्तु प्रीयतां भगवान् प्रजापतिः ब्रह्मा । अथ शान्तिरस्तु पुष्टिरस्तु तुष्टिरस्तु ऋद्धिरस्तु आयुष्यमस्तु आरोग्यमस्तु शिवं कर्मास्तु इति सर्वे सह ब्रूयुः । सर्वाणि प्रार्थनाप्रतिवचनानि प्रणवपूर्वकमेव कुर्युः । अत्र अस्तुशब्देषु पात्रे किञ्चित् किञ्चित् जलं निनीय तज्जलं कुम्भे निनयेत् । शुद्ध्यर्थं पुण्याहं चेत् आपोहिष्ठादिभिरभिमन्त्र्य पुण्याहजलेन गृहादि प्रोक्षयेत् ततस्तेभ्यो दक्षिणां दद्यात् ॥

॥ इति प्रयोगचन्द्रिकायां पञ्चमः खण्डः ॥

## अग्निप्रतिष्ठा

यत्र अग्निस्थापनं तत्र उदगपवर्गं प्राचीः प्रागपवर्गं उदीचीः तिस्रो रेखा दर्भादिना लिखित्वा तत्र न्यस्य अद्भिरवोक्ष्य नैर्ऋत्या निरस्य अप उपस्पृश्य, (अप उपस्पर्शने सूत्रं–रौद्रराक्षसनैर्ऋतपैतृकछेदन भेदननिरसनप्रत्यभिमर्शनानि कृत्वाऽप उपस्पृशेत् ।) तत्राग्निं प्रतिष्ठाप्य याज्ञिकैरिन्धनैः प्रज्वाल्य परिसमूह्य अवोक्षणशेषं प्रागुदग्वा उत्सृज्य अन्यज्जलं पात्रे प्रागुदग्वा यथा परिस्तरणात् बहिस्स्यात् तथा निधाय प्रागुदगग्रान् षोडश दर्भान् अग्नेः प्रागारभ्य प्रदक्षिणं परिस्तीर्य दक्षिणानुत्तरानुत्तरानधरान् कृत्वा अग्नेः उत्तरतो दर्भान् संस्तीर्य दर्व्याज्यस्थाल्यौ तत्पुरस्तात् प्रोक्षणीपात्रप्रणीतिपात्रे तत्पुरस्तादरत्निमात्र परिधित्रयं प्रादेशमात्राः सप्तदशसमिधश्च दर्भैः सन्नह्य इध्मापरदर्व्यौ द्वन्द्वेवाभि सादयेत्, इध्मस्य अत्रासादनं इध्मसन्नहनग्रन्थेरधस्तात्सादनमेव । शललीमौञ्जालाजादींश्च सर्वान् युगपदेव देवपात्रोत्तरतः सादयेत् । समावप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ काष्ठादिना छित्वा अप उपस्पृश्य मूलादारभ्य अग्रादद्भिरुन्मृज्य पवित्रे कृत्वा अग्नेः पश्चात् प्रोक्षणीपात्रे निधाय तस्मिन्नप आनीय उत्तानयोः उदक्प्रागग्रयोः दक्षिणवामयोः पाण्योः अङ्गुष्ठानामिकाभ्यां पवित्रमूलाग्रे गृहीत्वा प्रागपवर्गं त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा विस्रस्य इध्म सर्वमिस्ताभिः, अद्भिः पवित्रपाणिः त्रिः प्रोक्ष्य सपवित्रे प्रणीतिपात्रेऽप आनीय पूर्ववदुत्पूय हस्ताभ्यां घ्राणसममुद्धृत्य पात्रसादनादुत्तरतः दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य अग्नेर्दक्षिणतो दर्भेषु ब्राह्मणं निषाद्य विलीनमप्याज्यं होमार्थेऽग्नौ विलाप्य अग्नेः पश्चात् सपवित्रायां आज्यस्थाल्यां आज्यं निरूप्य परिस्तरणपात्रसादनयोर्मध्ये अङ्गारान् निरूह्य

तेष्वधिश्रित्य ज्वलता दर्भेण उल्मुकेन वा आज्यमवद्योत्य द्वे दर्भाग्रे काष्ठादिना छित्वाप्प उपस्पृश्य युगपदाज्ये प्रत्यस्य प्रागादि प्रदक्षिणं त्रिः पर्यग्नि कृत्वा उदगुद्रास्य अङ्गारान् प्रत्यूह्य आज्यस्थालीं स्वस्य पुरस्तान्निधाय पूर्ववत् पवित्रे गृहीत्वा प्रागारभ्य पुनःपुनःराहृत्य त्रिरुत्पूय पवित्रं विसृस्य अद्भिः संस्पृश्य युगपदग्नौ प्रहृत्य दर्व्यौ अग्नौ प्रतितप्य दर्भैः सम्मृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भान् अद्भिः संस्पृश्य अग्नौ प्रहृत्य पुंसवनोपाकर्मव्रतगृहप्रवेशेषु चरुकर्मसु च परिधीन् परिदध्यात् । अन्यत्र सीमन्तादिषु पलाशखादिरादीनां अन्यतमेन कृतान् परिधिस्थौल्यायामान् शम्याख्यान् युगकीलान् परिदधाति । तत्र स्थूलं उदगग्रं पश्चात्, अणुदीर्घं दक्षिणतः, अणुह्रस्वमुत्तरतः परिस्तरणोपरि अन्योन्यसंस्पृष्टान् निधाय मध्यमं परिधिमुपस्पृश्य अग्नेर्दक्षिणपूर्वोत्तरपूर्वयोराघारसमिधौ ऊर्ध्वे क्रमात् निधाय सव्येन पात्र स्पृशन् दक्षिणेन हस्तेन परिध्यन्तः परिस्तरणोपरि अदितेऽनुमन्यस्व इति दक्षिणतः प्रागपवर्गं, अनुमतेऽनुमन्यस्वेति पश्चादुदगपवर्गं,सरस्वतेऽनुमन्यस्वेति उत्तरतः प्रागपवर्गं देव सवितः प्रसुवेति प्रागारभ्य प्रदक्षिणं अग्निं परिषिच्य अग्निमलङ्कृत्य आज्याभ्यक्तं इध्ममूलमध्ययोर्मध्यं मृगमुद्रया गृहीत्वा ब्राह्मणानुज्ञया प्रजापतिं स्मरन् अग्नावाधाय अप उपस्पृश्य कराभ्यां इध्ममूलं परामृश्य सव्येनाज्यस्थालीं स्पृशन् उत्तरं परिधिसन्धिमारभ्य आग्नेयान्तमुपहृत्यां दक्षिणं सन्धिमारभ्यैशानान्तं प्रधानदर्व्याज्येन दीर्घधारया सर्वाणि इध्मकाष्ठानि संस्पर्शयन् स्वाहाकारवर्जमाघारहोमौ जुहुयात् । पूर्वस्य प्रजापतिः उत्तरस्य इन्द्रो देवता । अथ "अग्नये स्वाहा" इत्युत्तरार्धपूर्वार्धे, "सोमाय स्वाहा" इति दक्षिणार्धपूर्वार्धे च आज्यभागौ जुहुयात् । पुंसवनादौ "अग्नये स्वाहे"ति पुनरेकां आज्याहुतिं मध्ये जुहुयात् । विवाहे हिरण्यायां

पश्चिमजिह्वायां, जातकर्मणि कनकायां मध्यमजिह्वायां, उपनयने रक्तायामुत्तर-जिह्वाया, पितृकार्ये कृष्णायां दक्षिणजिह्वायां, सर्वदेवार्थे सुप्रभायां पूर्व-जिह्वायां, शान्तिकर्मणि अतिरिक्तायां ईशान्यदिकस्थितायां, तिलहोमे बहु-रूपायां आग्नेय्यां तत्तत्प्रधानाहुतीः जुहुयात् ।

॥ इति प्रयोगचन्द्रिकायां षष्ठः खण्डः ॥

### अथ जयादिः

अथ जयैश्चित्तं च स्वाहेति त्रयोदशभिरभ्यातानैः "अग्निर्भूतानां-मिति सानुषङ्गैः द्वादशभिः राष्ट्रभृद्भिः ऋताषाडिति सानुषङ्गैः द्वादशभिः "प्रजा-पते न त्वदेतानि" इत्येतया व्यस्ताभिः व्याहृतिभिः "यदस्य कर्मण" इत्येतया च अष्टौ पञ्चाशदाहुतीः हुत्वा पुंसवनादिषु परिधीनाज्येन निधान-क्रमेण अभ्यज्य मध्यमं परिधिं अग्नौ प्रहृत्य अन्यौ परिधी हस्ताभ्यां युग-पदादाय अग्नावुत्तराधेऽङ्गारोऽग्रं प्रवेश्य प्रहृत्य दक्षिणवामहस्ताभ्यां प्रधाने-तरदर्वीभ्यां सँस्रावहोमं जुहुयात् । सीमन्तादिषु शम्या अपोह्य सँस्रावहोमं जुहुयात् ॥

अथ मन्त्रतन्त्रदेवताविपर्यासन्यूनातिरिक्तस्वराक्षरपदभ्रेषप्रायश्चित्तार्थं सर्वप्रायश्चित्तहोमं होष्यामीति सङ्कल्प्य "भूर्भुवस्सुवः स्वाहा" इति सर्वप्राय-श्चित्तहोमं हुत्वा अनाज्ञातत्रयेण "त्वन्नो अग्ने" "सत्वन्नो अग्ने", इत्येताभ्यां "आभिर्गीर्भिः" "इदं विष्णु"रित्येताभ्यां व्यस्ताभिः समस्ताभिः

व्याहृतिमिश्रं हुत्वा श्रीविष्णवे स्वाहेति पूर्णाहुतिं हुत्वा पूर्ववत् परिषिञ्चेत् । अन्वमँस्थाः, प्रासावीरिति भेदः । प्रणीतिपात्रं स्वस्य पुरस्तात् निधाय अन्यजलं निनीय तज्जलं प्रागादिप्रदक्षिणं प्रतिदिशं व्युत्सिच्य पुरस्तान्निनीय तेनात्मानं प्रोक्ष्य दक्षिणतो निषादितं ब्राह्मणं संपूज्य "अग्ने नय" इत्यग्नि-सूक्तेन अग्निमुपस्थाय प्रणम्याभिवादयेत् ॥

## अथ प्रायश्चित्तम्

अग्नौ जलबिन्दुनिपातने "पुनस्त्वादित्या" इत्यग्निं प्रज्वाल्य सर्व प्रायश्चित्तं जुहुयात् । सर्वत्र प्रयत्नमन्तरेण अग्नौ प्रज्वलिते "उद्दीप्यस्व जातवेदः" "मानो हिंसीज्जातवेदः" इति द्वाभ्यां समिधौ आदध्यात् । प्रणीतिपात्रं भिन्नं चेत् "अभिन्नो घर्मो जीरदानुः" "यत आत्तस्तदगन्पुनः" इत्यभिमन्त्र्य "घर्मो देवाँ अप्येतु" इति अन्यपात्रं आनीय तस्मिन् पात्रे जलं पूरयित्वा व्याहृतिभिरुपतिष्ठेत । यदि प्रणीताः प्रणीयमाना वा सर्वा आपः परासिच्येरन् "अक्षितोऽस्यक्षित्यै त्वा मामे क्षेष्ठा अमुत्रामुष्मिन्लोके" इत्यभिमन्त्र्य "आपोहिष्ठे"त्यन्याद्भिः पूरयित्वा "आयुर्मे धारयत प्राणं मे धारयत, प्रजां मे धारयत, पशून्मे धारयत ममायुः प्राणाः प्रजाः पशवः परासिच्येरन्" इत्युपतिष्ठेत । "ततं म आपः" इति जुहुयात् । परिस्तरणदाहे "अग्नये-क्षामवते स्वाहा" "इन्द्रं वो विश्वतस्परीन्द्रं नरः" इति द्वाभ्यामन्यान् दर्भान् परिस्तीर्य "इन्द्राय स्वाहा" इति जुहुयात् । परिधिदाहे "परित्वाग्ने पुरं वयं" इति जुहुयात् । दर्वीकूर्चपवित्रेध्मद्रव्यसम्मार्गाणां च दाहे उप-घातविनाशेषु अन्यं यथालिङ्गं सादयित्वा संस्कृत्य "त्वन्नो अग्ने" "सत्वन्नो अग्ने" "त्वमग्ने अयासि" "प्रजापते नत्वदेतानि" इति जुहुयात् । प्रोक्षितानां वस्त्रादीनां छेदनादिषु "सोमाय स्वाहा" इति जुहुयात् ।

कर्ममध्येऽग्निनाशे "अयं ते योनिः" इति समिधि भस्म समारोप्य अन्यस्मिन् अग्नौ तां समिधं "आजुह्वानः "उद्बुध्यस्व" इति द्वाभ्यामाधाय प्रणवेन "भूरग्नये च" इति चतुर्भिः, "मनो ज्योतिर्जुषता"मिति जुहुयात्। अतोऽन्ये-ष्वनाम्नातेषु पाहि त्रयोदशकं जुहुयात्। सर्वत्र कर्मणामादावन्ते च भगव-त्स्मरणं तन्नामसङ्कीर्तनं च कुर्यात्। महदनुग्रहं च कारयेत्। एतदेव सर्वप्रायश्चित्तमिति विज्ञायते॥

॥ इति प्रयोगचन्द्रिकायां सप्तमः खण्डः ॥

## अथ गर्भाधानम्

अथ गर्भाधानं स्त्रीणां रजोनिर्गमनादि षोडशसु रात्रीषु आदौ चतस्रो रात्रीः परिहाप्य अन्यासु द्वादशसु अनिषिद्धायां रात्र्यामृतुसमावेशनं करिष्य इति सङ्कल्प्य "विष्णुर्योनिं कल्पयतु" इत्यादि "तं मे वायो समर्धय" इत्यन्तेन पत्नीमभिमन्त्र्य तया सह संविशेत्। (परेद्युः प्रातरभ्युदयं पुण्याहं च कुर्यात)॥

## अथ पुंसवनम्

पत्न्यां गर्भिण्यां द्वितीये तृतीये वा मासे पुंसवनं चतुर्थे षष्ठेऽष्टमे वा मासे सीमन्तेन सह वा पुंसवनं कुर्यात्। प्रतिसरं बद्ध्वा अमुकगोत्रां अमुकनाम्नीं भार्यां पुंसवनकर्मणा संस्करिष्यामि इति सङ्कल्प्य अग्निप्रतिष्ठादि पात्रसादनकाले न्यग्रोधस्य या प्राच्युदीची वा शाखा तत आहृतं फलद्वय-सहितं अङ्कुरं दृषत्पुत्रद्वयं नवं वासश्च सादयित्वा अग्निमुखान्ते पत्न्या-न्वारब्धः "धाता ददातु नो रयिं" इति चतुर्भिः, "यस्त्वा हृदा कीरिणे"ति

चतुर्भिः हुत्वा जयाद्यग्न्युपस्थानान्ते यस्याः रजःप्रादुर्भावः न स्यात् तया कन्यया न्यग्रोधाङ्कुरं दृषत्पुत्रे न्यस्य दृषत्पुत्रेण पेषयित्वा वस्त्राञ्चलेन पवयित्वा अग्नेः पश्चात् प्राक्शिरसं ऊर्ध्वमुखीं पत्नीं शाययित्वा स्वयं प्राङ्मुखः स्थित्वा दक्षिणाङ्गुष्ठेन तस्याः दक्षिणे नासिकाछिद्रे तद्रसं पुंसवनमसीति निनयेत् । सा तद्रसं निगिरेत् ॥

## अथ सीमन्तम्

अमुकगोत्रां अमुकनाम्नीं सीमन्तोन्नयनकर्मणा संस्करिष्यामीति सङ्कल्प्य अग्निप्रतिष्ठादिपात्रसादनकाले त्रिषु प्रदेशेषु शुक्लवर्णां शललीं पिशाचोदुम्बर-स्तबकं त्रीन् दर्भपुञ्जलान् सूत्रग्रथितान् विरूढान् यवांश्च सादयित्वा आज्य-भागान्ते पूर्ववत् प्रधानाहुतीः हुत्वा जयाद्यग्न्युपस्थानान्ते अग्नेः पश्चात् प्राङ्मुखीं पत्नीमुपवेश्य प्रत्यङ्मुखस्तिष्ठन् शलल्यादीन् सह गृहीत्वा तैः पत्न्या शिरोमध्यरेखां "भूर्भुवस्सुवः" "राकामहं" "यास्ते राके" इति द्वाभ्या-मुल्लिख्य पश्चान्निरस्याप उपस्पृश्य "गायतं" इति वीणागाथिनौ सम्प्रेषयेत् । तौ च "सोमएवनो राजा" इति गायेताम् । अत्र असावित्यस्य स्थाने यस्या नद्यास्तीरे वसन्ति तन्नाम सम्बुद्ध्या निविशेताम् । अथ सूत्रग्रथि-तान् यवान् पत्न्याश्शिरस्याबध्य आनक्षत्रोदयात् मौनी स्यात् । नक्षत्रेषूदि-तेषु प्राचीमुदीचीं वा दिशं गत्वा वत्समभिमृश्य व्याहृतीर्जपित्वा मौनं विसृजेत् ॥

## अथ जातकर्म

जाते पुत्रे दिवा नक्तं वा पिता सचेलः स्नात्वा अमुकगोत्रं अमुकनक्षत्रे जातं कुमारं जातकर्मकर्मणा संस्करिष्यामीति सङ्कल्प्य "दिवस्परि" इत्यनुवाकान्ते कुमारं अभिमृश्य "अस्मिन्नहं" इत्येतेन

तमङ्के निधाय "अङ्गादङ्गात्" इति द्वाभ्यां अभिमन्त्र्य ताभ्यामेव तस्य मूर्धन्यवघ्रायते एव तस्य दक्षिणे कर्णे जपेत्। अत्रासावित्यस्य स्थाने अभिमन्त्रणावघ्राणजपेषु कुमारः यस्मिन्नक्षत्रे जातः तन्नक्षत्रनाम रहस्यं निर्दिशेत्। आश्वयुज–आपभरण–कृत्तिक–रौहिण–मार्गशीर्ष–आर्द्रक–पुनर्वसो–पुष्य–आश्रेष–माघ–पूर्वफल्गुनि–उत्तरफल्गुनि–हस्तचैत्र–स्वाते–विशाख – अनूराध ज्येष्ठमूलक–पूर्वाषाढउ ाषाढ–श्रावण–श्रविष्ठ–शातभिषज–पूर्वप्रोष्ठपाद–उत्तर प्रोष्ठपाद–रैवतेति–मधु घृतं च संसृज्य तस्मिन् दर्भेण शिखाबन्धवत् सरन्ध्रेण ग्रन्थिना बद्धं हिरण्यमवधाय तेनादाय "मेधां ते देवस्सविता" इत्येतैः कुमारं प्राशयित्वा" क्षेत्रियै त्वा निर्ऋत्यै त्वा इति पञ्चभिः स्नापयित्वा दधि घृतं च कांस्यपात्रे संसृज्य तेनैव पात्रेण" भूःस्वाहा, भुवः स्वाहा, सुवःस्वाहा ओं स्वाहा इति प्राशयित्वा शेषमद्भिः संसृज्य अन्येन गोष्ठे निनीय स्वाङ्कस्थं कुमारं "मा ते कुमारं" इत्येतया मातुरङ्के निधाय "अयं कुमार" इत्येतया दक्षिणं स्तनं पाययित्वा "यद्भूमेः हृदयं" इत्येताभ्यां पृथिवीमभिमृशेत्। तस्याममिमृष्टायां पृथिव्यां माता कुमारं संवेशयेत। संविष्टं कुमारं नामयति न रुदतीत्यनेन अभिमृश्य "आपः सुप्तेषु जाग्रत" इत्यनेन कुमारस्य शिरः प्रदेशे उदकुम्भं निधाय अग्निं प्रतिष्ठाप्य परिस्तीर्य दर्वीवदञ्जलिं संस्कृत्य परिषिच्य फलीकरणमिश्रान् सर्षपान् "अयं कलि" इत्यादिभिः अष्टाभिः प्रतिमन्त्रं स्वाहात्रयसहितं प्रतिस्वाहाकारं अञ्जलिना चतुर्विंशतिवारं हुत्वा परिषिच्याग्निं उपस्थाय तमग्निं सुरक्षितं कृत्वा सूतिकागृहस्य प्रवेशे प्रवेशेऽस्मिन् अग्नौ फलीकरणमिश्रान् सर्षपानञ्जलिना प्रक्षिपतेति सूतिकागृहपालकान् जनान् प्रेषयेत्, कालातिक्रमे नेदं संप्रेषणं नाग्निसंरक्षणं च।

॥ इति प्रयोगचन्द्रिकायां अष्टमः खण्डः ॥

## ॥ नामकरणम् ॥

एकादशेऽह्नि नामकरणं द्वादशे षोडशेऽष्टादशे विंशे त्रिंशति द्वात्रिंशे पिता माता च अमुकगोत्रस्य अमुकनक्षत्रजातस्य कुमारस्य नाम धास्यावह इति सङ्कल्प्य शर्मान्तं नाम ब्रूयातां, विष्णुशर्मेत्यादि, ततोऽभ्युदयं पुण्याहं च कुर्यात् । अस्मिन् पुण्याहे विशेषः अमुकशर्मण आयुष्मते स्वस्ति भवन्तो ब्रुवन्तु, अमुकशर्मण आयुष्मते स्वस्तीति ।

## ॥ अन्नप्राशनम् ॥

षष्ठे सावने मासि अन्नप्राशनमष्टमे दशमे द्वादशे वा अमुकगोत्रं अमुकशर्माणं कुमारं अन्नप्राशनेन कर्मणा संस्करिष्यामीति सङ्कल्प्य दधि मधु घृतमोदनं च संसृज्य "भूरपां त्वौषधीनां रसं प्राशयामीति चतुर्भिः कुमारं प्राशयेत् । सर्वत्रादश्शब्देषु तत्तद्विभक्तिकं शर्म ब्रूयात् । सर्वत्र मन्त्रान्ते क्रियाः कुर्यात् ॥

## ॥ चौलम् ॥

जन्मादिमाससङ्ख्यया तृतीये वर्षे चौलं पञ्चमे वा गर्भाद्वा तृतीये पञ्चमे वा स्नातं शुद्धवस्त्रधरं धृतोर्ध्वपुण्ड्रं प्रक्षालितपाणिपादं आचान्तं कुमारं दक्षिणत उपवेश्य अमुकगोत्रं अमुकशर्माणं कुमारं चौलकर्मणा संस्करिष्यामीति सङ्कल्प्य क्षारलवणवर्जं कुमारं भोजयित्वा अग्निप्रतिष्ठादिपात्रप्रयोगान्ते शीतोष्णजले यवान् द्वादशदर्भान् आनडुहं शकृत्पिण्डं क्षुरं शलल्यादींश्च सादयित्वा आज्यभागान्ते कुमारेणान्वारब्धः "धाता ददातु नो रयिम्" इत्यादिभिरष्टाभिः हुत्वा जयाद्यग्न्युपस्थानान्ते अग्नेः पश्चात् प्राङ्मुखं कुमार-

मुपवेश्य शलल्यादिना तस्य शिखार्थान् वपत्यांश्च केशान् पृथक् पृथक् विभज्य पश्चान्निरस्य अप उपस्पृश्य "उष्णेन वायवुदकेन" इत्यनेन उष्णं जलं शीतजले निनीय "आप उन्दन्तु" इत्येतया तेन जलेन, कुमारस्य शिरः प्रागादिप्रदक्षिणं सेचयित्वा त्रीन् दर्भान् पुरस्तात् केशेषु अन्तर्धाय "येनावपत्" इत्येतया क्षुरेण वपन्तमाचार्यं यः कश्चित् ब्रह्मचारी कुमारस्य माता वा दक्षिणत उपविश्य "यत् क्षुरेण मर्चयत" इत्येतयानुमन्त्रयेत् । अथाचार्यः सदर्भान् केशान् तद्धस्ते प्रदाय "येन पूषा" इत्येतया पूर्ववत् दक्षिणतः छित्वा प्रदाय "येन भूयः" इति पश्चात् पूर्ववत् छित्वा प्रदाय "येन पूषा" इति पूर्ववत् उत्तरतः छित्वा प्रदाय अप उपस्पृशेत् । ब्रह्मचारी माता वा तान् सर्वान् केशान् आनडुहे शकृत्पिण्डे यवान्विते निधाय "उप्त्वाय केशान्" इत्येतया उदुम्बरमूले दर्भस्तम्भे वा निदध्यात् । ततः क्षुरं प्रक्षाल्य निदध्यात् । तेन त्रिदिनं क्षुरकर्म न कुर्यात् । उष्णोदकेन संस्नाप्य दक्षिणत आसीनाय ब्राह्मणाय गां दद्यात् । पितुरन्यः चौलकर्ता चेत् तस्मै दद्यात् ॥

## ॥ स्त्रीणां जातकर्मादि ॥

स्त्रीणां जातकर्मादि चौलान्तान् अङ्कुरार्पणसहितान् होमवर्जितान् अमन्त्रकं कुर्यात् । सप्तमाद्ययुग्मे मासि अन्नप्राशनं मातरि रजस्वलायां समनन्तरगर्भवत्यां वा पञ्चमाब्दात् पूर्वं पुत्रस्य पञ्चमाब्दात् अधः चौलं न कुर्यात् । व्यवहितगर्भवत्यां तु अदोषः । समनन्तरगर्भवत्यामपि पञ्चमाब्दे कुर्यात् । जन्ममासे जन्मवारे जन्मनक्षत्रे वा शुभकर्म न कुर्यात् । जन्ममासे ज्येष्ठमासे वा सीमन्तजस्य पुत्रस्य पुत्र्या वा शुभकर्म न कुर्यात् ।

द्वितीयादिविवाहे वयोऽधिककन्यादाने वा न दोषः। एकस्मिन् गृहे त्रिषु मासेषु शुभद्वयं न कुर्यात्। आचार्यभेदे द्वारभेदे वा कुर्यात। गृहान्तरेऽपि पुत्रविवाहानन्तरं पुत्रीविवाहं न कुर्यात्। पुत्रीविवाहशेषहोमानन्तरं पुत्र्य-न्तरविवाहं वा कुर्यात्। एकमातृप्रसूतानां एकस्मिन् वर्षे तुल्योत्सवं न कुर्यात्। तथा विवाहादूर्ध्वं चौलोपनयने उपयनादूर्ध्वं चौलं च न कुर्यात्। वर्षभेदे त्रिमासादूर्ध्वं कुर्यात्। यमलयोः भिन्नमातृकयोः न तुल्योत्सवनिषेधः। देवोत्सवमध्ये मनुष्योत्सवं न कुर्यात। चौलोपनयन-विवाहेभ्य ऊर्ध्वं वर्षं वर्षार्धं वा क्षौरं न कुर्यात्। तत्रोपाकर्म चेत् ब्रह्मचारी कुर्यात्। तच्छेषं केशान् धारयेत। जातकर्मादि चौलान्तान् पितैव कुर्यात्। ऊर्ध्वं श्रुतवृत्तादिसम्पन्नः पिताऽन्यो वा कुर्यात्। पितुरसन्निधाने सर्वमन्यः कुर्यात्। प्रवासादागतः पिता "अङ्गादङ्गा"दिति द्वाभ्यां पुत्र-मभिमन्त्र्य ताभ्यामेव मूर्धन्यवघ्राय "अग्निरायुष्मान्" इति दक्षिणे कर्णे पञ्च मन्त्रान् जपेत्। "सर्वस्मादात्मन" इति अनूढां पुत्रीमभिमन्त्रयेत। एवं प्रतिपुत्रं ज्येष्ठक्रमेण कुर्यात्॥

॥ इति प्रयोगचन्द्रिकायां नवमः खण्डः ॥

## ॥ अथोपनयनम् ॥

पञ्चमषष्ठसप्तमवर्षेषु वसन्तेषु कुर्यात्। चौलवत् कुमारं दक्षिणत उपवेश्य अमुकगोत्रं अमुकशर्माणं कुमारं उपनेष्ये इति सङ्कल्प्य "यज्ञोपवीतं परमं" इति मन्त्रं सर्षिच्छन्दोदैवतं उच्चरन् धारयित्वा मन्त्रं वाचयित्वा आचमय्य परिषेचनापोशनप्राणाहुतिसहितं क्षारलवणवर्जं कुमारं भोजयित्वा

चौलवत् दिग्वपनं कृत्वा क्षौरं कारयित्वा स्नातं कुमारं दक्षिणत उपवेश्य अग्निप्रतिष्ठादिपात्रसादनान्ते अश्मानं सद्यःकृत्तं वासो मौञ्जीमजिनं दर्भान् उदकं कूर्चं दण्डं च सादयित्वा आज्यभागान्ते कुमारस्य हस्ते पालाशीं समिधं प्रदाय "आयुर्दादेवे"ति मन्त्रमुच्चरन् आधेहीत्युक्त्वा कुमारेण समिधमाधाप्य "आतिष्ठेमं" इति मन्त्रमुच्चरन् अग्नेरुत्तरतोऽश्मानं "दक्षिणेन पदा तिष्ठ" इति ब्रूयात्। कुमारः दक्षिणेन पदा अश्मानमास्थाय तत्रैवाधस्तात् तिष्ठेत्। आचार्यो 'रेवतीस्त्वा" इति द्वाभ्यां वस्त्रमभिमन्त्र्य "परीदं वासः" इति तिसृभिः परिधाप्य "या अकृन्तन्" इत्येतया कुमारमभिमन्त्रयेत्। "इयं दुरुक्तात्" "मित्रस्य चक्षुः" "आगन्त्रा," "समुद्रादूर्मिः" "उदायुे"त्येतान् मन्त्रान् स्वयमुच्चरन् तत्तत्क्रियां कृत्वा पश्चात् कुमारं वाचयेत्। "इयं दुरुक्तात्" "ऋतस्ये"त्येताभ्यां त्रिवृतां मौञ्जीं कटिदेशे त्रिः प्रदक्षिणं परिधाय नाभिदेशे ब्रह्मग्रन्थिं कृत्वा "मित्रस्य चक्षुः" इत्येतया अजिनमुत्तरलोम धारयित्वा अग्नेरुत्तरतो दर्भान् संस्तीर्य तेषु "आगन्त्रा" इत्येतया कुमारं प्रत्यङ्मुखं अवस्थाप्य प्राङ्मुखः तिष्ठन् अन्यावर्जितं स्वोदकाञ्जलिं तस्या अञ्जलावानीय तेनोदकेन "समुद्रादूर्मिः" इत्येतया कुमारं त्रिः प्रोक्ष्य "अग्निष्टे हस्तमग्रभीत्" इत्यादिभिः दशभिः तस्य साङ्गुष्ठमुत्तानं दक्षिणं हस्तं गृहीत्वा "अग्नये त्वा परिददामि" इत्येकादशभिः प्रतिमन्त्रं अग्न्यादि-देवताभ्यो रक्षणार्थं किञ्चित् हस्तं, प्रसार्य दत्वा "देवस्य त्वा" इति हस्ताभ्यां आलिङ्ग्य आत्मनः समीपं नीत्वा यथास्थानमुपवेश्य "सुप्रजाः प्रजया" इति दक्षिणकर्णे जपित्वा ब्रह्मचर्यमागां इति तं वाचयित्वा को नामासि इति पृच्छेत्। असौनामास्मीति प्रतिब्रूयात्। कस्य ब्रह्मचार्यस्यसाविति पृष्टे प्राणस्य ब्रह्मचारी अस्मीति प्रत्युक्ते असौ एष ते देव सूर्य इति जपित्वा "अध्वनां अध्वपत" इति तं वाचयित्वा "योगे योग" इत्यादिषु एका-

दशेषु मन्त्रेषु द्वितीयचतुर्थौ स्वयमुक्त्वा स्वाहेति कुमारं वाचयन् हावयेत् । अन्यान् नव मन्त्रान् कुमारमेव वाचयन् हावयित्वा जयादिसँस्रावान्तं कृत्वा "भुवः स्वाहा" इति हुत्वा प्रायश्चित्तपरिषेचनप्रणीतावोक्षणानि कृत्वा सदस्यान् प्रणम्य दक्षिणां दत्वा अनुज्ञाप्य अग्नेः पश्चात् कुमारनिहिते कूर्चे "राष्ट्रभृदसीति" प्राङ्मुखः उपविशेत् । ततः कुमार आचार्यं प्रणम्य अभिवाद्य तस्य पुरस्तात् प्रत्यङ्मुखः आसीनो दक्षिणेन पाणिना दक्षिणं पादं सव्येन सव्यमुपसङ्गृह्य सावित्रीं भो अनुब्रूहि इति प्रार्थयेत् । अथ आचार्यः पादादौ प्रणवादिं व्याहृतित्रयं, अर्धर्चादौ प्रथमद्वितीये व्याहृती अनवानं द्वौ तृतीयां व्याहृतिं च संयोज्य गायत्रीं तस्य दक्षिणे कर्णे जपित्वा तथैव त वाचयित्वा अक्ष्मसौ सौम्येति दक्षिणहस्तेन उत्तरमोष्ठं उपस्पर्शयित्वा आचामयेत् । नात्र अदश्शब्दे शर्मनिर्देशः "ब्रह्मण आणीस्थ" इति हस्ताभ्यां युगपत् कर्णौ उपस्पर्शयित्वा "सुश्रवः सुश्रवसं" इति पालाशं बैल्वं वा दण्डं धारयित्वा "स्मृतं च मे" इत्यादि "सर्वव्रतो भूयासं" इत्यन्तं वाचयेत् । कुमारो वरं ते ददामि इति गुरवे गां दद्यात् । अथाचार्यो दक्षिणनासिकया वायुं सप्तदशकृत्वः आरोप्य "देवस्ये"त्युक्त्वा "राजा त्वा वरुणो नयतु देवि दक्षिणे रुद्राय गां इत्यादि आङ्गीरसः प्रतिगृह्णातु" इत्यन्तं उक्त्वा प्रतिगृह्य "उदायुषेति" कुमारमुत्थाप्य "तच्चक्षुरित्यादिभिः आदित्योपस्थानं कारयित्वा दक्षिणतोनिषादितं ब्राह्मणं सम्पूज्य आसमावर्तनमस्मत्तोऽयं न विप्रयुज्येतेति यं कुमारं कामयते तस्य दक्षिणं हस्तं "यस्मिन् भूतं च" इत्येतया दक्षिणहस्तेन गृह्णीयात् । ततोऽग्निमुपतिष्ठेत् । ततः कुमारः त्रिः प्राणानायम्य समिधमाधास्यामीति सङ्कल्प्य उल्लिख्यावोक्ष्य अग्निं प्रतिष्ठाप्य प्रज्वाल्य "परित्वाग्न" इति परिसमूह्य परि-

षिच्य "अग्नये समिधमाहार्षं" इत्याद्यैः द्वादशभिः मन्त्रैः द्वादश समिधः आधाय तूष्णीं परिसमूह्य परिषिच्य "यत्ते अग्न" इति त्रिभिः "मयि मेधां" इति त्रिभिश्च अग्निमुपतिष्ठेत। एतमग्निं त्र्यहं धारयेत्। अस्मिन् अग्नौ सायं प्रातः समिधः आदध्यात्। त्र्यहादूर्ध्वमासमावर्तनात् लौकिकाग्नौ समिदाधानं सायमेवेत्येके। अथ आचार्यः कुमारं ब्रह्मचार्यसीत्यादि षडर्थान् श्रावयेत्। प्रतिसंशानं बाढमिति ब्रूयात्। आचार्यः तस्मै अरिक्तं पात्रं प्रयच्छन् मातरमेव भिक्षस्व भगिनीं वेति ब्रूयात्। स च "भवति भिक्षां देहि" इति मातरमेवाग्रे भिक्षेत भगिनीं च। तत्समाहृत्य उपनिधाय भैक्षमिदमाहृतमिति आचार्याय ब्रूयात्। तत्सुभैक्षमित्याचार्यः प्रतिगृह्णीयात्। कुमारः त्र्यहं क्षारलवणवर्जं भुञ्जीत। मन्त्रवद्धृतमेव वस्त्रं धारयेत्। चतुर्थेऽहनि तद्वस्त्रं विसृज्य अन्यद्वस्त्रं परिधाय गुरो वस्त्रं ते ददामीति पूर्वधृतं वस्त्रं आचार्याय दद्यात्। अथ आचार्यः आयुं पूर्ववत् आरोप्य "यस्य ते प्रथमवास्यँ हराम" इत्येतया तत् प्रतिगृह्णीयात्। मातरि गर्भिण्यां रजस्वलायां वा उपनयनं न कुर्यात्।

## ॥ अथ पुनस्संस्कारनिमित्तानि ॥

तीर्थयात्रां विना गौडवङ्गकलिङ्गसौवीरसौराष्ट्रमागधावन्तिदक्षिणापथादिदेशगमने सिन्धुतरणे विण्मूत्रप्राशने मद्यप्राशने सर्वेषां पुनरुपनयनं ब्रह्मचारिणस्तु प्रेतनिर्हरणे पितृमातृपितामहाचार्योपाध्यायमातुलपितृव्यज्येष्ठेभ्यः अन्येषां प्रेतकार्ये पितृमातृज्येष्ठभ्रात्राचार्यव्यतिरिक्तोच्छिष्टान्नप्रेतान्नाशौचान्नगणान्नगणिकान्नशूद्रान्नसूतकान्नभोजने श्राद्धभोजने अनिर्दशाहक्षीरपाने मधुमांसभक्षणे मातरि रजस्वलायां उपनयने च पुनरुपनयनं कार्यम्। उपवीतपरित्यागे सप्तकृच्छ्राणि

कृत्वा पुनरुपनयनं कुर्यात् । मेखलाजिनमौञ्जीदण्डभिक्षाचरणत्रिरात्रव्रतानि पुनरुपनयने वर्जयेत् ।

॥ इति प्रयोगचन्द्रिकायां दशमः खण्डः ॥

## ॥ अथोपवीतविधिः ॥

स्वाध्यायदिवसे शुचि कार्पासनिर्मितं सूत्रं प्रणवेनाभिमन्त्र्य "आपो-षा इदँ सर्वं" इति अद्भिरभिषिच्य सप्तप्रणवपूर्वकं व्याहृतित्रयेण अभिमन्त्र्य चतुरङ्गुलमानेन षण्णवतिसंख्यया सूत्रं अच्छिन्नं त्रिगुणीकृत्य प्रणवव्याहृतिभिः प्रोक्ष्य कूर्चोपरि निधाय "आपोहिष्ठा मयोभुव" इति तिसृभिः "हिरण्यवर्णाः शुचयः पावकाः" इति च तिसृभिः "पवमानस्सुवर्जनः" इत्यनुवाकेन च दर्भैः प्रोक्ष्य प्रत्यङ्मुखो गृहीतमध्यः गृहीताग्रौ प्राङ्मुखो दक्षिणहस्तोर्ध्वं पाणिभ्यां प्रणवव्याहृभिः अनुवर्त्य सावित्र्या त्रिगुणीकृत्य प्राणानां ग्रन्थिरसीति ग्रन्थिं कृत्वा वामहस्तोर्ध्वं पाणिभ्यां अनुवर्त्य दर्भैः घृत्वा दर्भास्तृते शुचौ देशे प्रसार्य तदुपरि द्वौ दर्भौ प्रास्य त्रिः करध्वनिं कृत्वा भ्रमत्सूत्रं नावेक्षेताम् । अनन्तरं तत्सूत्रमादाय अश्वत्थादियाज्ञियवृक्षे पितृभ्यो नम इति बद्ध्वासूत्रकुटिं प्रणवव्याहृतिभिः ऋजूकृत्य त्रिवलयं कृत्वा अग्राभ्यां मध्यमावेष्ट्य पुनः सूत्रत्रयं परिवेष्ट्य प्राणानां ग्रन्थिरसीति ब्रह्मग्रन्थिं कृत्वा शुचौ देशे गोमयोपलिप्ते व्रीहीन् निधाय तदुपरि जलपूर्णं सकूर्चं सयाज्ञियशाखं कुम्भं निधाय तस्मिन् प्रणवव्याहृतिभिः यज्ञोपवीतं निधाय गन्धादिभिरभ्यर्च्य यज्ञोपवीतप्रतिष्ठां करिष्य इति सङ्कल्प्य यज्ञोपवीतं स्पृशन् प्रणवव्याहृतिभिः व्यस्ताभिः समस्ताभिः व्याहृतिभिश्च प्रतिमन्त्रैश्च प्रतिष्ठाप्य "भूरग्निं च" इत्यनुवाकेनाभिमन्त्र्य नवतन्तुदेवताः पृथिवीमापोऽग्निं वायु-

आकाशं प्राणं आत्मानं अन्तरात्मानं परमात्मानं च ग्रन्थित्रयदेवताः ब्रह्म-विष्णुरुद्राः यज्ञोपवीताधिष्ठानदेवतां परमात्मानं च आवाह्य आसनादिभिरभ्यर्च्य "आकृष्णेन" उदयं त्रयस्त्रः "चित्रं देवानां" "तच्चक्षुः" इति चतुर्भिः सूर्याय प्रदर्श्य पूर्ववत् निधाय यज्ञोपवीतं स्पृशन् अष्टोत्तरशतं गायत्रीं जपित्वा "त्र्यम्बकं यजामहे" इति सकृज्जपित्वा उत्तानेन दक्षिणहस्तेन अवाचीनेन वामहस्तेन यज्ञोपवीतं गृहीत्वा सर्षिच्छन्दोदैवतं "यज्ञोपवीतं" इति मन्त्रेण धारयेत्। प्रत्युपवीतं मन्त्रोच्चारणाचमने कुर्यात्। विच्छिन्नैकतन्तुं अवि-च्छिन्नैकतन्तुं वा त्रिभिः ब्राह्मणैः वा अनिर्मितं अनुवर्तते मनुष्यमार्जारादिभिः अधोगतं पूयशोणितविण्मूत्रश्लेष्मोच्छिष्टं दूषितं अशुचिस्पृष्टं विण्मूत्रोत्सर्जने चण्डालैः ग्रामचण्डालैश्च सम्भाषणे निवीतं कृत्वा दक्षिणे कर्णे च अनि-क्षिप्तं चोपवीतं परित्यजेत्। भुजकूर्परमणिबन्धेषु उपवीते गते क्रमेण त्रीन् षट् द्वादश प्राणायामान् कुर्यात्। क्रोधात् मोहाद्वा यज्ञोपवीतच्छेदने नद्यां स्नात्वा अष्टसहस्रगायत्रीं जपेत्। उपवीतनाशे यावदुपवीतं न लभ्यते तावत् कार्पासतन्तुगोवालकुशेषु अन्यतमेन कृतं धारयेत्। एकरात्रमपि उप-वीतेन विना शूद्रो भवति।

## ॥ अथोपाकर्म ॥

श्रावण्यां पौर्णमास्यां प्रातःकाले तैष्यां पौर्णमास्यामध्यायोत्सर्जना-करणप्रायश्चित्तार्थं अष्टोत्तरसहस्रं कामोऽकार्षीन्मन्युरकार्षीदिति मन्त्रजपं करिष्ये इति सङ्कल्प्य तं मन्त्रं जपेयुः। अथ ब्रह्मचारिणो वापयेयुः। अथ अप-राह्णे श्रावण्यां पौर्णमास्यां अध्यायोपाकर्म करिष्य इति सङ्कल्प्य कटि-सूत्रकौपीनयज्ञोपवीताजिनदण्डान् नवान् तत्तन्मन्त्रेण यथार्हं धृत्वा

पुरातनान् परित्यज्य स्नात्वा आचाम्य निवीतं कृत्वा "प्रजापतिं, सोममग्निं, विश्वान् देवान्, सांहितीर्याज्ञिकीः, वारुणीः, ब्रह्माणं स्वयम्भुवं, सदसस्पतिं च नव एतान् काण्डर्षीन् ऋषितीर्थेन तिलाक्षतोदकैः त्रिस्त्रिः तर्पयित्वा आचम्य शुष्कवस्त्रं धारयेयुः। अथ आचार्योऽग्निप्रतिष्ठाद्यग्निमुखान्ते शिष्यैरन्वारब्धः "प्रजापतये काण्डर्षये स्वाहे"त्यादिभिः नवभिः हुत्वा "इषे त्वा" इत्यादीन् चतुरोऽनुवाकांश्च अध्याप्य जयाद्युपस्थानान्तं कुर्यात्।

परेद्युः महानद्यां तत्सम्बन्धिनि वा जले स्नात्वा मिथ्याधीतप्रायश्चित्तार्थं सावित्र्या समित्सहस्रमाधास्यामीति सङ्कल्प्य अग्निं प्रतिष्ठाप्य परिस्तीर्य परिषिच्य प्रणवव्याहृतिपूर्वया सावित्र्या आज्याभ्यक्तं समित्सहस्रं एकैकश आधाय परिषिच्य "अग्ने नय" इत्यग्निमुपतिष्ठेत्। अथवा सावित्रीं सहस्रकृत्वो जपिष्यामीति सङ्कल्प्य प्रणवादीनां ऋष्यादिपूर्वकं प्राणायामत्रयादि कृत्वा सप्तव्याहृतिपूर्विकां गायत्रीं शिरसा सह दशवारं जपित्वा आयात्वित्याद्यावाहनादिपूर्वकं सहस्रं जपित्वा त्रिः प्राणानायम्य गायत्रीमभिवाद्य "उत्तमे शिखरे देवि" इत्युद्वासयेत्॥

॥ इति प्रयोगचन्द्रिकायां एकादशः खण्डः ॥

## ॥ अथ व्रतानि ॥

प्राजापत्यसौम्याग्नेयवैश्वदेवाख्यानि चत्वारि व्रतानि चत्वारि काण्डानि चत्वार्युत्सर्जनानि तत्तद्व्रतानि चरित्वा तत्तत्काण्डानधीत्य तत्तत्काण्डान्ते तत्तदुत्सर्जनानि कुर्यात्। काण्डानां सङ्कीर्णत्वेन तथाध्ययनाभावेऽपि यदा कदाचिदुत्तरायणे विवाहात्पूर्वं व्रतानि उत्सर्जनानि च कुर्यात्।

## ॥ प्राजापत्यव्रतम् ॥

ब्रह्मचर्यव्रतलोपप्रायश्चित्तं षडब्दकृच्छ्रादिकं चरित्वा कृत्तकेशं स्नातं दक्षिणत उपवेश्य आचार्यः अमुकगोत्रं अमुकशर्माणं माणवकं प्राजपत्यव्रतेन कर्मणा संस्करिष्यामीति सङ्कल्प्य प्राजापत्यव्रतं चरिष्यामीति वाचयित्वा वस्त्रयज्ञोपवीतादि पूर्ववत् धारयित्वा पुरातनानि त्याजयित्वा स्नातं शिष्यं सोमाग्निविश्वेदेववर्जं काण्डर्षितर्पणं पूर्ववत् कारयित्वा अग्निप्रतिष्ठाद्यग्निमुखान्ते शिष्येणान्वारब्धः "प्रजापतये काण्डर्षये स्वाहा" "प्रजापते न त्वदेतानी"त्यादि षड्भिः प्रतिमन्त्रं हुत्वा "सांहितीभ्यो देवताभ्यः" इत्यादि पूर्ववत् हुत्वा अग्ने व्रतपते काण्डर्षिभ्यः इत्यादिभिः चतुर्भिः उपस्थानं कारयित्वा जयाद्यग्न्युपस्थानान्तं कुर्यात्। एवमेवोत्सर्जनं प्राजापत्यव्रतोत्सर्जनेन कर्मणा संस्करिष्यामि। प्राजापत्यव्रतोत्सर्जनं चरिष्यामि प्राजापत्यव्रतब्रह्मचारिणं इति भेदः।

## ॥ सौम्यव्रतम् ॥

अपराह्णे सौम्यव्रतेनेत्यादि सङ्कल्पं वस्त्रयज्ञोपवीतादिधारणं प्रजापत्याग्निविश्वेदेववर्जं काण्डर्षितर्पणं अग्निप्रतिष्ठेत्यादिसमानं, पात्रसादनान्ते चतस्र औदुम्बरीः समिधः उदकुम्भं नववस्त्रं च सादयित्वा अग्निमुखान्ते शिष्येणान्वारब्धः "सोमाय काण्डर्षये स्वाहा" "सोमो धेनु"मित्यादिषड्भिश्च सांहितीभ्य इत्यादिभिश्च जुहुयात्।

ततः शिष्योऽग्नेः पुरस्तात् धान्योपरि स्थापितं सोदकं सकूर्चं वस्त्रवेष्टितं कुम्भमुपस्पृश्य "नमो वाचे" इत्यनुवाकं जपित्वा पृथिवी समित्यादिभिः

चतुर्भिराज्याभ्यक्ता औदुम्बरीः समिधः अग्नावाधाय अग्ने व्रतपत इत्युपतिष्ठेत। अथाचार्यो "युञ्जते मन" इत्यादीनां "देवा वै सत्रमासत" इत्यादीनां चानुवाकानां प्रथमपदानि "युञ्जते सवित"ति वा पदद्वयं शिष्यं वाचयित्वा जयाद्युपस्थानान्तं कुर्यात। ततः शिष्य उदकुम्भमुपस्पृश्य "शन्नो वातः पवता" मित्यनुवाकं जपित्वा वाचं यच्छेत। अथ आचार्यः शिष्यस्य मुखं शिरो नववस्त्रेण प्रदक्षिणं वेष्टयित्वा अस्तमिते ग्रामं प्रापयेत्। तां रात्रिं शिष्यो वाग्यतः तिष्ठेत्। आसीत वा श्वोभूते ग्रामाद्बहिः गत्वा शिरोवेष्टनवस्त्रमपनीय आचार्याय दत्वा अग्निमुदकुम्भं आदित्यमाकाशं गिरिं वत्सं सुवर्णं च यथासम्भवमाचार्यदर्शितं दृष्ट्वा "वयस्सुपर्णा" इति आदित्यं उपतिष्ठेत। एवमेवोत्सर्जनं, "युञ्जत" इत्यादिवाचनं शिरोवेष्टनाद्यादित्योपस्थानान्तं च वर्जयेत्। द्यौस्समित् इत्यादिभिः समिदाधानं आदित्यव्रतपते इत्यादिभिरुपस्थानं आचार्याय वरदान च कुर्यात्॥

## ॥ आग्नेयव्रतम् ॥

### प्राजापत्यव्रतसमानम्

आग्नेयव्रते प्रजापतिसोमविश्वेदेववर्जं तर्पणं "अग्नये काण्डर्षये स्वाहा" "अग्ने नयेति" षड्भिश्च सांहितीभ्य इत्यादिभिश्च हुत्वा आग्नेयव्रतं चरिष्यामीति भेदः। एवमेव वैश्वदेवव्रतं प्रजापतिसोमाग्निवर्जं तर्पणं विश्वेभ्यो देवेभ्यः स्वाहा आनो विश्वे अस्त्रागमन्तु देवाः इति षड्भिः होमः वैश्वदेवव्रतं चरिष्यामि इति भेदः। उत्सर्जने तु व्रतमचारिषमिति॥

॥ इति प्रयोगचन्द्रिकायां द्वादशः खण्डः॥

## ॥ समावर्तनम् ॥

स्नातकर्म करिष्यमाणः सूर्योदयात्पूर्वं व्रजं प्रविश्य अन्तर्लोम्ना चर्मणा व्रजद्वारं प्रच्छाद्य आसायं तत्रैव वसेत्। अस्मिन् अहनि वहिरातपे न निर्गच्छेत्। मध्यन्दिने स्नातकर्म करिष्य इति सङ्कल्प्य अग्निप्रतिष्ठादिपात्रसादनान्ते पालाशीं समिधं कटं क्षुरं शीतमुष्णं च जलं यवान् शकृत् दर्भान् औदुम्बरं दन्तकाष्ठं स्नानीयं नवं वस्त्रद्वयं चन्दनं सोपधानं सूत्रप्रोतं सौवर्णं मणिं बादरं मणिं कुण्डलद्वयं स्रजं आञ्जनमादर्शनमुपानहौ छत्रं वैणवं दण्डं च सादयित्वा आज्यभागान्ते पालाशीं समिधं आज्याभ्यक्तां "इमँ स्तोमं" इत्येतया अग्नावाधाय अग्नेः पश्चात् कटे एरकायां वा उपविश्य "त्र्यायुषं" इत्येतया क्षुरमभिमन्त्र्य "शिवो नामासि" इति कस्मैचित् मन्त्रविदे प्रदाय तेन चौलवत् दिग्वपने कृते नापितेन सर्वाङ्गवपनं कारयित्वा स्नात्वा व्रजस्य पश्चिमार्धे उपविश्य मौञ्जीं विसृज्य कस्मैचित् ब्रह्मचारिणे प्रयच्छेत्। स तां इदमहममुष्येति औदुम्बरमूले दर्भस्तम्बे वा छादयेत्। अथोष्णाह अपः शीतासु आनीय ताभिः "आपो हिष्ठा मयोभुव" इति तिसृभिः "हिरण्यवर्णाः शुचयः पावकाः" इति तिसृभिः स्नात्वा अन्वाधाय व्यूहध्वं इत्यौदुम्बरेण काष्ठेन प्रादक्षिण्येन दन्तधावनं कृत्वा धात्रीपिष्टादिना स्नानीयेन देहं शिरश्चानुलिप्य स्नात्वा "सोमस्य तनूरसि" इत्यहतं वासः परिधाय द्विराचम्य उपवीतद्वयं धृत्वा "नमो ग्रहाय च" इत्येतैः कस्तूरिकादिभिः गन्धद्रव्यैः वासितं चन्दनं देवताभ्यः प्रदाय "अप्सरस्सु च यो गन्धः" इत्येतया आत्मानमनुलिप्य वज्रवैडूर्यादिना उभयतः परिगृहीतसूत्रप्रोतं सौवर्णमणिं "इयं ओषधे त्रायमाणा" इत्येतया उदपात्रे त्रिः प्रदक्षिणमावृत्य "अपाशोस्युरोम" इत्येतया कण्ठे तं मणिमाबद्ध्य सूत्रप्रोतं बादरं मणिं पूर्ववत्तूष्णीं त्रिरावृत्य सव्ये पाणौ

बध्नीयात्। अथ मन्त्रवित् कश्चित् ब्राह्मणः "रेवतीस्त्वेति" द्वाभ्यां नवं वस्त्रमभिमन्त्र्य "या अकृन्तन्" इति तिसृभिः उत्तरीयं धारयित्वा धृतोत्तरीयं "परीदं वास" इत्येतया अनुमन्त्रयेत। अथ उत्तरीयस्य दशायां कुण्डले बध्वा ते दर्व्या अग्रे स्थापयित्वा सव्येन हस्तेन तयोरुपरि आज्यमानीय तेन "आयुष्यं वर्चस्य" इत्यष्टाभिः प्रतिमन्त्रं हुत्वा कुण्डले अपनीय जयाद्यग्न्युपस्थानान्तं कृत्वा "आयुष्यं वर्चस्यं" इत्यष्टाभिरेव दक्षिणे कर्णे पुनश्च तामिरेव सव्ये कर्णे क्रमेण कुण्डले धृत्वा "शुभिकेशिर" इति द्वाभ्यां शिरसि स्रजमाबध्य "यदाञ्जनं मयि पर्वतपूरुषं" इति द्वाभ्यां अक्ष्णोः युगपत् अञ्जनं धृत्वा "यन्मे वर्चः" इत्येतया आदर्शमवेक्ष्य "प्रतिष्टेस्थ" इत्युपानहौ युगपत् धृत्वा तूष्णीं छत्रमादाय प्रजापतेश्शरण-मसीत्यात्मानं आच्छाद्य "देवस्य" त्वेत्यादिना निवारयेत्यन्तेन शिरःप्रमाणं ऋजुं सत्वचं असुषिरं युग्मपर्वयुक्तं कल्माषं काकपृष्ठरहितं वेणवं दण्डं आदाय आनक्षत्रोदयात् मौनी भूत्वा उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशं उपनिष्क्रम्य "देवीः षडुर्वीः" इति प्रागाद्यधरान्तं षड्दिशमुपस्थाय "माहास्महि" इति नक्षत्राणि चन्द्रमसं च युगपदुपस्थाय मित्रेण सहालोच्य विवाहं संन्न्यासं वा कुर्यात्॥

## ॥ तूष्णीं स्नानम् ॥

एवं स्नातकर्म कर्तुमशक्तः तूष्णीं स्नानकर्म करिष्य इति सङ्कल्प्य सर्वाङ्गवपनं कारयित्वा स्नात्वा मौञ्जीं विस्रस्य ब्रह्मचारिणे दत्वा पुण्यनद्यादौ तीर्थे स्नात्वा दन्तधावनाद्युत्तरीयधारणान्तं अमन्त्रकं कृत्वा अग्निं प्रतिष्ठाप्य

परिस्तीर्य परिषिच्य प्रजापतिं मनसा ध्यायन् पालाशीं समिधं तूष्णीमग्नावाधाय परिषिच्य कुण्डलधारणादीनि सर्वाणि अमन्त्रकं कुर्यात् ॥

## ॥ स्नातकृत्य कर्तव्यम् ॥

समावर्तनप्रभृत्याविवाहात् सायं प्रातः लौकिकाग्निं प्रतिष्ठाप्य परिस्तीर्य आज्यं दर्वीं च संस्कृत्य परिषिच्य व्यस्ताभिः समस्ताभिः व्याहृतिभिः "अनाज्ञातं" इत्यादिभिश्च हुत्वा अग्निमुपतिष्ठेत। संन्यासं कर्तुकामोऽपि चत्वारि व्रतानि समावर्तनं च कृत्वैव संन्यसेत्। नैष्ठिकस्तु सोत्सर्जनानि चत्वारि व्रतानि चरित्वा समावर्तनमपि कृत्वा काषायवासाः यावज्जीवं ब्रह्मचर्यं चरेत्। उपकुर्वाण उद्वहेत संन्यसेद्वा ॥

॥ इति प्रयोगचन्द्रिकायां त्रयोदशः खण्डः

## ॥ अथ विवाहः ॥

विवाहं करिष्यमाणः स्वयं वा अन्यो वा अमुकगोत्रस्य अमुकशर्मणः वरस्य अमुकगोत्रायाः अमुकनाम्न्याः कन्यायाश्च उभयोः उद्वाहकर्माङ्गं अङ्कुरार्पणकर्म करिष्य इति सङ्कल्प्य तत् कृत्वा, तथैव सङ्कल्प्य प्रतिसरबन्धं च कुर्यात्। अथ वरो वरान् प्रेषयिष्य इति सङ्कल्प्य सुहृदः समवेतान् वेदविदः चतुरो ब्राह्मणान् "प्रसुग्मन्तेति" द्वाभ्यामभिमन्त्र्य यूयममुकगोत्रात् कन्यां मह्यं वृणीध्वमिति प्रेषयेत। ततस्ते दुहितृमन्तं गत्वा अमुकगोत्राय अमुकशर्मणे वराय अमुकगोत्रां अमुकनाम्नीं भवदीयां कन्यां (कन्यां प्रजासहत्वकर्मभ्यो वृणीमहे इति पाठान्तरम्।) प्रजासहत्वकर्मभ्यो वृणीमहे" इति ब्रूयुः।

ततो दुहितृमान् दास्यामि इति प्रतिब्रूयात्। ततः प्रत्येत्य सिद्धार्थं वधूमिति वराय आवेद्य दुहितृमतो गृहं वरमानयेयुः। तत्र स्नातां अहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीं अलङ्कृतां कन्यां स्वयं चैवंभूतो वरः पश्येद्। उपोषितो दुहितृमान् कृतस्नानादिः कन्यादानं करिष्य इति सङ्कल्प्य वराय आसनं दत्वा भार्यावर्जितेन जलेन वरस्य पादौ प्रक्षाल्य आचम्य वस्त्रभूषणगन्धपुष्पाणि गां भूमिं च यथाशक्ति दत्वा अमुकशर्मणो नप्त्रे अमुकशर्मणः पौत्राय अमुकशर्मणः पुत्राय अमुकशर्मणे वराय तुभ्यं अमुकशर्मणो नप्त्रीं अमुकशर्मणः पौत्रीं अमुकशर्मणः पुत्रीं अमुकनाम्नीं मदीयां इमां कन्यां प्रजासहत्वकर्मभ्यः प्रतिपादयामीति प्रत्यङ्मुखस्तिष्ठन् प्राङ्मुखमवतिष्ठतो वरस्य दक्षिणे हस्ते कन्यकाया दक्षिणं हस्तं सहिरण्यं उदकपूर्वं दद्यात्। वरः तां प्रतिगृह्य विवाहस्थाने उपविश्य उद्वाहं करिष्य इति सङ्कल्प्य मथितं श्रोत्रियागाराद्वाहृत (अग्निं प्रतिष्ठाप्य प्राक्सोमान्तं कृत्वा कन्याशालां गच्छेत् इति पाठान्तरम्॥) अग्निं प्रतिष्ठाप्य परिस्तीर्य कन्याशालां गच्छेत्। आगताय वराय दाता मधुपर्कदानं करिष्य इति सङ्कल्प्य आसनार्थं अयं कूर्च इति कूर्चं निक्षिपेत्। तस्मिन् वरे "राष्ट्रभृदसि" इति प्राङ्मुख उपविष्टे पादप्रक्षालनार्थं जलमादाय आपः पाद्याः इति ब्रूयात्। वरः तज्जलं "आपः पादावनेजनीः" इत्येतया अभिमन्त्र्य प्रक्षालनार्थं दक्षिणं पादं पूर्वं प्रक्षालयेत्। दाता पूर्ववत् पादौ प्रक्षालयेत्। वरः अथ उपस्पृश्य प्रक्षालयितारं दक्षिणभुजे स्पृष्ट्वा प्रतिलोमेन पाणिना "मयि महः" इति स्वहृदयमभिमृश्याथ उपस्पृश्याचामेत्। दाता मृण्मये पात्रे पुष्पाक्षतसंयुक्तं अर्हणार्थं जलमानीय सकूर्चाभ्यां सव्यदक्षिणाभ्यां [illegible] परिगृह्य अर्हणीया आप इति ब्रूयात्। वरः तदा[illegible]

इत्येतया अभिमन्त्र्य तदेकदेशे दात्रा स्वाञ्जलौ दीयमाने "विराजो दोहोऽसीति" जपित्वा तच्छेषं दात्रा पुरस्तान्नीयमानं "समुद्रं वः प्रहिणोमीत्येतयाऽभिमन्त्रयेत्। दाता वराय वस्त्रकुण्डलाङ्गुलीयादि दत्वा दधि मधु घृतं च कांस्यपात्रे कस्मिंश्चित्पात्रे वा संसृज्य बृहता कांस्यपात्रेण पूर्ववत् गृह्य मधुपर्क इति ब्रूयात। त्रिः ब्रूयादित्येके। वरः पाणिभ्यां तं प्रतिगृह्य पिधानपात्रमपनीय "त्रय्यै विद्याया" इति द्वाभ्यां अभिमन्त्र्याचम्य अमृतोपस्तरणमसि इत्यपः प्राश्य "यन्मधुनो मधव्यमिति" मधुपर्कं त्रिः प्राश्य अमृतापिधानमसि इत्यपः प्राश्याचामेत्। ततो दाता वराय गां प्रदर्श्य गौरिति ब्रूयात। वरः पाणिभ्यां तं प्रतिगृह्य "यज्ञो वर्धतां" इत्यादिमन्त्रान् उपांशु जपित्वा "ओं उत्सृजत" इत्युच्चैः प्रतिब्रूयात्। सिद्धेऽन्ने दाता तिष्ठन् वराय भूतमिति ब्रूयात। वरः तदन्नं सा विराट् इति उपांशु अभिमन्त्र्य ओं कल्पयतेत्युच्चैः ब्रूयात्। ततो दाता वरं भोजयेत्। ततो वरस्तण्डुलराशिस्थां धान्यराशिस्थां वा कन्यां दृष्ट्वा "अभ्रातृघ्नीं" इत्येतां जपित्वा चक्षुरुपसङ्गृह्य "अघोरचक्षुरित्येतया कन्यादृष्टौ स्वदृष्टिं निपात्य अवयवशः समीक्ष्य तया सह दर्भेष्वासीन आवाभ्यां कर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्या इति सङ्कल्प्य, वध्वा अपि एवं सङ्कल्पः। अङ्गुष्ठानामिकाभ्यां दर्भं सङ्गृह्य तेनेदमहं या त्वयि इति तस्या भ्रुवोः मध्य सम्मृज्य पश्चान्निरस्य अप उपस्पृशेत। तया एतन्मात्रादिभिर्वा अन्योन्यवियोगचिन्तया रोदने कृते "जीवं रुदन्ति" इति जपेत्। ततो वेदविदः समवेतान् चतुरो ब्राह्मणान् वधूस्नानार्थं उदकुम्भमाहर्तुं "व्युक्षत्क्रूरम्" इत्येतया उच्चैः प्रेषयेत। ते च यत्र पूर्वं पुरुषाः स्नानादिषु न मृताः तत उदकमानयेयुः। अथ वरो दर्भैः कृतं वलयमर्यम्णोऽग्निं इति तस्याः शिरसि निधाय

तदुपरि "खेनसः" इत्येतया दक्षिणं वाह्ययुगच्छिद्रं निधाय तस्मिन् छिद्रे "शन्ते हिरण्यं" इत्येतया हिरण्यमन्तर्धाय पूर्वमाहृतेन जलेन "हिरण्यवर्णाः" इति पञ्चभिः तां स्नापयित्वा "परित्वागिर्वणो गिर" इत्येतया अहतं वासः परिधाप्य द्विराचमय्य "माङ्गल्यतन्तुनाऽनेन" इति तस्या आसीनायाः कण्ठे माङ्गल्यसूत्रं बध्वा "आशासाना सौमनसं" इत्येतया तस्याः कटिदेशे योक्त्रेण सन्नह्य स्वस्य दक्षिणहस्तेन तस्याः दक्षिणहस्तं गृहीत्वा "पूषात्वेतो नयतु" इत्येतया अग्नेरभिमुखमानीय अग्नेः पश्चादुदग्रं कटं आस्तीर्य तस्मिन् दक्षिणतः वधूः, उत्तरतः स्वयं च युगपदुपविश्य पात्रसादनान्ते अश्मानं लाजांश्च युगपत्सादयित्वा आज्यभागान्ते "सोम प्रथमः" इत्येताभ्यां पत्नीमभिमन्त्र्य तस्या उत्तानं साङ्गुष्ठं हस्तं अवाचीनेन स्वदक्षिणहस्तेन "गृह्णामि ते" इति चतसृभिः गृहीत्वा तया सहोत्थायाग्नेरुत्तरतो गत्वा तत आरभ्य प्रागायतनानि उदगायतनानि वा सप्तपदानि "एकमिषे"— इत्यादिभिः सप्तभिः प्रतिमन्त्रं दक्षिणेन पदा प्रक्रमय्य सप्तमे पदे निहिते "सखा सप्तपदा भव" इत्यादि "सूनृत" इत्यन्तं जपित्वाग्निं प्रदक्षिणं कुर्यात्। सर्वेष्वपि प्रदक्षिणेषु आज्यस्थालीं प्रणीतिं अश्मानं लाजांश्च अभ्यन्तरे कृत्वा दक्षिणतो निषादितस्य ब्राह्मणस्याग्नेश्चान्तरा गच्छेत्। एवं पत्न्या सह प्रदक्षिणं कृत्वा यथास्थानमुपविश्य हस्तं मुक्त्वा पत्न्याऽन्वारब्धः "सोमाय जनिविदे स्वाहा" इत्यादिषोडशभिः प्रतिमन्त्रं हुत्वा अग्नेरुत्तरतोऽश्मानं "आतिष्ठेमं" इति पत्नी दक्षिणेन पदा स्थाप्य दर्वीसंस्कारवत् पत्न्यञ्जलिं सम्कृत्य तस्मिन्नुपस्तीर्य द्विः लाजानावपेत्। जमदग्नीनां त्रिः। पत्न्याः सोदर्यो लाजानावपतीत्येके। अभिधार्य वध्वञ्जलिं गृहीत्वा तेन देवतीर्थेन "इयं नार्युपब्रूते" इत्येतया हुत्वा तस्या

हस्तं गृहीत्वोत्थाप्य "तुभ्यमग्रे पर्यवहन्" इति तिसृभिः तया सहाग्निं प्रदक्षिणं कृत्वा पूर्ववत् अश्मानमास्थाप्योपविश्य "अर्यमणं नु देवं" इति पूर्ववत् लाजान् हुत्वा पूर्ववत् प्रदक्षिणं कृत्वा पुनरप्यश्मानमास्थाप्योपविश्य "त्वमर्यमा भवसि" इति पुनः लाजान् हुत्वा पुनः प्रदक्षिणं कृत्वा यथास्थानमुपविश्य जयाद्यन्युपस्थानान्तं कृत्वा "प्रत्वा मुञ्चामि" इत्येताभ्यां योक्त्रं विमुञ्चेत्। पश्चात् निरस्याप उपस्पृशेत्। एतमेवाग्निं यावज्जीव धारयेत्। एतस्मिन्नग्नौ "यद्दतेषित्" इतिहोम, प्रविश्यहोम, सर्वस्थालीपाकशेषहोम, पुंसवन, सीमन्त, गृहप्रवेश, पार्वण, पिण्डपितृयज्ञोपासन, वैश्वदेवपञ्चमहायज्ञादीनि कुर्यात् ॥

॥ इति प्रयोगचन्द्रिकायां चतुर्दशः खण्डः ॥

## ॥ अथ उत्तम्भनादि ॥

अथ तां पत्नीं हस्तिनाश्वेन शिबिकयान्दोलिकया मनुष्यादिना वा गृहं प्रापयेत्। रथेन प्रापणे "सत्येनोत्तभिता (द्यौः)" इति रथस्योत्तम्भनं कृत्वा "युञ्जन्ति ब्रध्नं" "योगे योगे" इति द्वाभ्यां दक्षिणवामयोः क्रमेण वाहौ संयोज्य रथादिवाहनमारोहेति "सुकिं शुकमिति चतसृभिरभिमन्त्र्य रथवर्त्मन्योः भाविन्योः दक्षिणवामयोः क्रमेण नीललोहिते सूत्रे नीललोहितं भवत इत्येतया व्यवस्तीर्य तयोरुपरि ये वध्वश्चन्द्रं वहतुमिति तिसृभिः गच्छेत्। पत्न्याः पश्चादवधर्मेण विवाहाग्निं हारयेत्। मार्गमध्ये पुण्यवत्तीर्थस्थाणुचतुष्पथव्यतिक्रमे "तामन्दसाने" त्येतां जपेत्। "[illegible] नो महाः पारं इत्येतया नावमभिमन्त्रयेत्। स पत्नी नाविकान् [illegible]। नदीं तीर्त्वा

"अत्य पार" इत्येतां जपेत्। श्मशानोपगमने पत्नीभूषणाविनाशे वा रथनाशे वा यद्दादिहोमः। "यद्दतेचिदित्यादिहोमं करिष्य इति सङ्कल्प्य अग्निप्रतिष्ठाद्याज्यभागान्ते पत्न्यान्वारब्धो "यद्दतेचिदभिश्रिषः" इति सप्तभिः प्रतिमन्त्रं हुत्वा जयाद्यान्युपस्थानान्तं कुर्यात्। प्लक्षन्यग्रोधादिक्षीरवृक्षाति-क्रमे "ये गन्धर्वाः" इत्येतां जपेत्। नदीमरुकान्तारयोरतिक्रमे "या ओषधय" इत्येतां जपेत् ॥

## ॥ अथ प्रविश्यहोमारम्भः ॥

"संकाशयामि" इत्येतया स्वगृहं पत्न्याः सन्दर्शयेत्। "आवाम गन्" इति द्वाभ्यां दक्षिणवामयोः क्रमेण बाहू विमुच्य गृहं प्रविश्य "शर्म वर्मेदं" इत्येतया अगारस्य मध्ये लोहितमानडुहं चर्मप्राक्छिर उत्तर-लोमास्तीर्य दक्षिणपादनिधानपूर्वकं पत्नीं गृहं प्रवेशयेत्। गृहान् भद्रानिति तां वाचयेत्। उभावपि पादेन देहलीं न स्पृशेताम्। गृह उत्तरपूर्वदेशे प्रविश्यहोमं करिष्य इति सङ्कल्प्य अग्निप्रतिष्ठाद्याज्यभागान्ते पत्न्यान्वारब्धः "आगन् गोष्ठा"मिति त्रयोदशभिः प्रतिमन्त्रं हुत्वा जयाद्युपस्थानान्तं कृत्वा पूर्वास्तृते चर्मणि "इह गाव" इत्येतया उपविशेताम्। सर्वत्रोपवेशने दक्षिणतः पत्नी उत्तरतो वरः। अथ यस्याः पुत्रा एव जायन्ते जाता-स्सर्वेऽपि जीवन्ति तस्याः पुत्रं "सोमेनादित्याः" इत्येतया पत्न्यङ्के निवेश्य तस्मै प्रस्वस्य इति कदल्यादिफलानि दत्वा "इह प्रियं इत्येते जपित्वा उभौ-वाचं यच्छतः आनक्षत्रोदयात्–उदितेषु नक्षत्रेषु प्राचीं उदीचीं वा दिशं गत्वा ध्रुवक्षितिः ध्रुवयोनिरिति ध्रुवं, "सप्तर्षयः प्रथमां" इत्यरुन्धतीं च क्रमेण दर्शयित्वा तया सहोपविशेत् ॥

## ॥ आग्नेयस्थालीपाक ॥

आग्नेयेन स्थालीपाकेन यक्ष्य इति सङ्कल्पयेत् । पत्नी व्रीहीनवहन्यात् । तस्मिन्नेवाग्नौ स्वयं चरुं श्रपयित्वा अभिघार्योत्तरतोऽवतार्य पुनरभिघार्याग्निप्रतिष्ठाप्याग्निमुखान्ते पत्न्याऽन्वारब्धो दर्व्यामुपस्तीर्य हविर्मध्यादङ्गुष्ठपर्वमात्रं मध्यानामिकाऽङ्गुष्ठैः द्विरवदाय (जमदग्नीनां त्रिः) सकृदभिघार्य चरौ प्रत्यभिघार्य "अग्नये स्वाहा" इत्यग्निमध्ये हुत्वा पूर्ववदुपस्तीर्य आर्द्रामलकमात्रमुत्तरार्धात् सकृदवदाय तेषां द्विरवदाय द्विरभिघार्य " अग्नये स्विष्टकृते स्वाहा" इति प्रागुदीच्यां पूर्वाहुत्यसंसक्तं हुत्वा निधानक्रमेण परिधीनभ्यज्य प्रधानदर्वीं दक्षिणत इतरां मध्ये आज्यस्थालीमुत्तरतश्चाग्नेः पश्चान्निधाय पात्रसादनदर्भानादाय प्रधानदर्व्यामग्रं इतरदर्व्यां मध्यं आज्यस्थाल्यां मूलं इति क्रमेण त्रिरक्त्वा तेष्वेकं दर्भं प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां दर्व्यां प्रतिष्ठाप्य सव्यंकरं निरस्य तिर्यञ्चं हस्तं धारयन् अग्रमुखत्याग्नौ प्रहृत्य निहितं दर्भं च प्रहृत्य तर्जन्या त्रिरग्निं निर्दिश्य तमभिमन्त्र्य दक्षिणहस्तेन भूमिं स्पृष्ट्वा मध्यमं परिधिं अग्नौ प्रहृत्य अन्यौ हस्ताभ्यां युगपदादाय अग्नावुत्तरार्धस्य अङ्गारेषु अग्रं प्रवेश्य प्रहृत्य संस्रावहोमादि कुर्यात् । एवं सर्वत्र चरुकर्मसु परिध्यञ्जनादि संस्रावान्तं लेपकार्यं कुर्यात् । ततो बह्वाज्यसिक्तेन हुतशेषेण चरुणा दक्षिणतो निषादितं ब्राह्मणं भोजयित्वा पूज्याय ब्राह्मणायर्षभं दद्यात् । पूर्णपात्रमपीत्येके ॥

## ॥ औपासनारम्भः ॥

रात्रौ नवसु नाडिकासु औपासनमारभेत । नवघटिका अतीताश्चेत् अस्तमाये ब्राह्मणाननुज्ञाप्य औपासनामारप्स्य इति सङ्कल्प्य सायमौपासनहोमं

होष्यामीति पुनस्सङ्कल्प्य उल्लिख्यावोक्ष्याग्निं प्रतिष्ठाप्य प्राक्तोयं निधाय परिषिच्य अग्नावेकां समिधमाधाय द्वादशपर्वपूरितं तण्डुलं अग्नये स्वाहेति हस्तेन देवतीर्थेन अग्निमध्ये हुत्वा किञ्चिदधिकभागं "अग्नये स्विष्टकृते स्वाहा" इति अनावृत्तपूर्वं पूर्ववत् हुत्वा पुनरेकां समिधमाधाय परिषिच्याग्निमुपतिष्ठेत् ॥

## ॥ दम्पत्योः नियमः ॥

विवाहादिशेषहोमान्तं द्वितीयादिविवाहेष्वपि दम्पत्योः क्षारलवणमधुदन्तधावनाञ्जनाभ्यञ्जनगन्धपुष्पताम्बूलखट्वादिशयनस्मरणकीर्तनकेलीप्रेक्षणगुह्यभाषणसङ्कल्पाध्यवसायक्रियानिर्वृत्तिरूपाष्टाङ्गमैथुनवर्जं आग्नेयस्थालीपाकादि चतूरात्रं तयोरेकस्मिन् कटे शयनं कार्यम् । शयने च तयोर्मध्ये नैयग्रोधौदुम्बराश्वत्थप्लाक्षेष्वन्यतमदण्डं गन्धपुष्पालङ्कृतं वाससा सूत्रेण वा परिवेष्टितं निधाय तस्मिन् विश्वावसुं गन्धर्वं भावयेत् ॥

## ॥ अथ शेषहोमः ॥

चतुर्थ्यां रात्र्याम् अन्त्ययामे "दण्डमुदीर्ष्वात" इत्येताभ्यामुत्थाप्य प्रक्षाल्य निधाय शेषहोमं करिष्य इति सङ्कल्प्याग्निप्रतिष्ठाद्याज्यभागान्ते पत्न्यान्वारब्धः "अग्ने प्रायश्चित्त" इति सप्तभिः प्रतिमन्त्रं हुत्वा जयाद्यग्न्युपस्थानान्ते अग्नेः पश्चात् पत्नीं प्राङ्मुखीमुपवेश्य तस्याश्शिरसि हुतशेषमाज्यं "भूः स्वाहा भुवः स्वाहा, सुवः स्वाहा, ओं स्वाहेति त्रिनयेत् । "अपश्यं त्वा मनसा चेकितानं" इत्येतया पत्नी पतिं समीक्षेत । अपश्यं त्वा मनसा दीध्यानामित्येतया पतिः पत्नीं समीक्षते । आज्याभ्यक्ताभ्यां अङ्गु-

ष्ठानामिकाभ्यां "समञ्जन्तु विश्वे देवाः" इत्येतया तयोः हृदयदेशौ युगपत् सम्मृज्य "प्रजापते तन्वं मे" इति तिस्रो जपेत् ॥

## ॥ अथ समावेशनम् ॥

तद्रात्रौ अन्यस्यां वा रात्रौ उपलिप्तं गन्धपुष्पधूपवासितं घृतदीपदीपितं स्वास्तरणतल्पयुक्तं गृहं पत्न्या सह प्रविश्य समावेशनं करिष्य इति सङ्कल्प्य "आरोहोरुमित्यादि "देवेषु कृणुतो दुव" इत्यन्तं जपित्वा तया सह संविशेत् । परदिनमारभ्य द्वादशाहं पूर्वोक्तक्षारलवणवर्जनादिव्रतं एकरात्रोपवासं च सपत्नीकश्चरित्वा परेद्युः वैश्वदेवं पञ्चमहायज्ञानारभेत । ततोऽपरपक्षे मासिश्राद्धं च संवेशनानन्तरमपरपक्षश्चेत् पूर्वं मासिश्राद्धमारभ्य पश्चात्पूर्वपक्षे वैश्वदेवमारभेत । यद्यस्मिन् समावेशनकाले दैवादृतुगमनप्राप्तौ तदा "आरोहोरु"मिति पूर्वं जपित्वा "विष्णुर्योनिं" इति पश्चादभिमन्त्र्य ततस्तया सह संविशेत् ॥

॥ इति प्रयोगचन्द्रिकायां पञ्चदशः खण्डः ॥

## ॥ दर्शपूर्णमासारम्भः ॥

दर्शपूर्णमासस्थालीपाकौ पौर्णमास्यां अमावास्यायां वा पत्न्या सह कृतैकभुक्तः परेद्युराग्नेयस्थालीपाकवत् कुर्यात् । द्वेधा विभक्तस्याह्नो मध्ये तत्पूर्वं वा पर्वप्रतिपत्सन्धिश्चेत् तस्मिन्दिने स्थालीपाकं कुर्यात् । परतस्सन्धिश्चेत् परस्मिन् दिने कुर्यात् । आग्नेयस्थालीपाकशेषहोमयोः मध्ये वा तदूर्ध्वं वा पौर्णमास्यां स्थालीपाकमारभेत । आषाढादिपितृमासचतु-

ष्ट्याधिमासगुरुशुक्रमौढ्यग्रहणसङ्क्रान्तिदोषदुष्टत्वे तत्पूर्वं शेषहोमात्परं दर्श-सम्भवे दर्शात्पूर्वमेव यस्यां कस्यांचित् तिथौ पौर्णमासस्थालीपाकं कृत्वा दर्शस्थालीपाकं च स्वकाले कुर्यात्। तत्र दर्शपूर्णमासस्थालीपाकावारप्स्ये पौर्णमासस्थालीपाकेन यक्ष्य इति संकल्पः। एवं दर्शपूर्णमासस्थालीपाकौ प्रतिप्रतिपदि कुर्यात। शरदि पौर्णमास्याममावास्यायां वा आग्रयणेन स्थाली-पाकेन यक्ष्य इति सङ्कल्प्य पूर्ववत् व्रीह्यवहननाद्यग्निमुखान्ते पत्न्यान्वारब्धः पूर्ववदवदाय इन्द्राग्निभ्यां स्वाहा, विश्वेभ्योदेवेभ्यः स्वाहा, द्यावापृथिवीभ्यां स्वाहा, अग्नये स्विष्टकृते स्वाहेति हुत्वा लेपकार्यादि कृत्वा ग्रासमात्रं हुत-शेषं अन्नं तण्डुलं वा प्राश्य अपः पीत्वाचम्य यथोत्क्षिप्यमाणो न शीर्येत, तथा सुदृढमोदनं पिण्डं हुतशेषेण कृत्वा "परमेष्ठ्यसि परमां मा श्रियं गमय" इति गृह्य पृष्ठवंश उत्क्षिप्य चरुशेषेण बह्वाज्यसिक्तेन ब्राह्मणं भोजयेत। एतेषु वृषभदानवर्जं अष्टाविंशत्यधिकशतमुष्टिकान्नपूर्णं यत्किंचित्पात्रं दद्यादि-त्येके। आग्रयणं कर्तुमशक्तः श्रोत्रियस्य हुतशेषं याचयित्वा प्रश्नीयात्॥

## ॥ कन्याया रजोदर्शने कर्तव्यम् ॥

विवाहे "सोमाय जनिविदे स्वाहे"ति होमात्पूर्वं कन्यायां रजस्व-लायां आपो अस्मानिति यजुःपवित्रेण पुरुषसूक्तपञ्चशान्त्यब्लिङ्गगायत्रीपवमानैश्च अभिमन्त्रितजलेन तां स्नापयित्वा अन्यद्वस्त्रं परिधाप्य तस्मिन्नेवाग्नौ सम-स्ताभिः व्याहृतिभिः "सप्तते अग्ने" यन्मे आत्मनो मिन्दा "पुनरग्नि" रित्येतैः "भूरग्नये" "भूरन्नमग्नये" "भूरग्नयेचेति" अनुवाकत्रयेण प्रति-स्वाहाकारं तन्तुन्तन्वन्नित्येतया व्यस्ताभिः व्याहृतिभिः अनाज्ञातमित्यादिभिश्च हुत्वा ब्राह्मणाननुज्ञाप्य तन्त्रशेषं समापयेत्। प्रधानहोमात्परं रजोदर्शने

चतुर्थेऽहनि स्नानब्रह्मकूर्चप्राशनपुनस्स्नानानि कारयित्वा तन्त्रशेषं समापयेत् ॥

॥ इति प्रयोगचन्द्रिकायां षोडशः खण्डः ॥

## ॥ पुनर्विवाहनिमित्तानि ॥

वरस्य कन्याया वा मातरि रजस्वलायां वा गर्भिण्यां आशौचे सूतके वा अशुभनक्षत्रे वा विवाहे कृते विवाहानन्तरं प्रवेशहोमात्पूर्वं स्वग्रामप्रयाणे वा केनचिद्विघ्नेन वा द्वादशाहेऽतिक्रान्ते विवाहौपासनारम्भयोः मध्येऽग्निनाशे च पुनर्विवाहं कुर्यात् । तत्राङ्कुरप्रतिसरवरप्रेषणादिवर्जं "अभ्रातृघ्नी" इत्यौपासनान्तं सर्वमेकस्मिन् दिने सुमुहूर्ते कृत्वा तस्मिन्नेव अपररात्रे शेषहोमं कुर्यात् । प्रोषितस्य पित्रादेः वृत्तान्ताश्रवणेन पञ्चदशाब्दादिकाले गते तद्भ्रात्राद्यैः तस्यौर्ध्वदैहिके कृते पुनरागते तस्मिन् तस्यापि पुत्रादिः तं घृतपूर्णे कटाहादौ त्रिरात्रमेकरात्रं वा निक्षिप्य सुमुहूर्ते तमुत्थाप्य जातकर्माद्यैः वैश्वदेवव्रतान्तैः संस्कुर्यात् । एवं संस्कृतः सः कस्मिंश्चित् गिरौ द्वादशाहं त्र्यहं वा नियमपूर्वकं उपोष्यागम्य समावर्तनं कृत्वा पूर्वभार्यां तदभावे कन्यां वा उद्वाह्य "अग्नय आयुष्मते" स्थालीपाकं कुर्यात् । आहिताग्निश्चेदग्नीनाधाय व्रात्यस्तोमेन यजेत । अथवा गिरिं गत्वा तत्रैव ऐन्द्राग्नेन पशुना यजेत । अथवा अग्नये कामायेष्टिं कुर्यात । ततोऽग्नय आयुष्मतेष्टिं कुर्यात । ततो यथेष्टं क्रतुभिः यजेत ।

## ॥ विवाहाद्यग्निनाशे ॥

औपासनारम्भशेषहोमयोर्मध्ये अग्निनाशे त्रिरात्रमध्ये उपनयनाग्निनाशे-दशरात्रमध्ये जातकर्माग्निनाशे वा क्रमेण विवाहाग्निसन्धानमुपनयनाग्नि-

सन्धानं जातकर्माग्निसन्धानं करिष्ये इति संकल्प्य "अपहता असुराः" "शन्नो देवीः" इति द्वाभ्यां तद्भस्म प्रोक्ष्य "अयं ते योनिर्ऋत्विय" इति समिधि तद्भस्म समारोप्य मथिताग्नौ विवाहश्चेत् मथिताग्निं, श्रोत्रियागारात् आहृताग्नौ विवाहश्चेत् श्रोत्रियागारादाहृताग्निं जातकर्मोपनयनयोः लौकिकाग्निं प्रतिष्ठाप्य "आजुह्वानः" "उद्बुध्यस्वेति द्वाभ्यां लौकिकाग्नौ तां समिधमाधाय परिस्तीर्याज्यं दर्वीं च संस्कृत्य परिषिच्य "अयाश्च" "अग्निर्होतेति द्वाभ्यां" ब्राह्मण एक होता" इत्यनुवाकेन दशभिः "मनोज्योतिः" "यन्म आत्मनोमिन्दा" "पुनरग्नि"रिति तिसृभिः "भूरग्नये" "भूरग्नमग्नये" "भूरग्नये च" इत्यनुवाकत्रयेण प्रतिस्वाहाकारं व्यस्ताभिः समस्ताभिः व्याहृतिभिः अनाज्ञातत्रयेण च हुत्वा परिषिच्य तत्तत्तन्त्रशेषं समापयेत् ।

## ॥ धार्याग्निनाशे ॥

दिवा रात्रौ वा भोजनात्पूर्वं अग्निनाशे अग्निं सन्धाय एककालमुपवसेत् । भोजनात्परं चेत् द्विकालमुपवसेत् । अमेध्यादिना स्पृष्टेऽन्यैरपहृते वाग्नौ एवं स्वयमेव नष्टेऽग्नौ उपवासं वा "अयाश्चाग्नेऽसी"त्याहुतिं वा कुर्यात् । सर्वत्राग्निसन्धाने सायमारभ्य आहुतिचतुष्टयं तन्त्रेणैव कुर्यात् । प्रतिमासं पादकृच्छ्रं कुर्यात् । पञ्चप्रस्थतण्डुलं पादप्रस्थघृतं च श्रोत्रियेभ्यो दद्यात् ।

" प्रस्थपरिमाणं—द्वात्रिंशत्प्रसृतिःषोडशमुष्टिर्वा प्रस्थः ॥

## ॥ औपासनाग्निद्वयसंसर्गे ॥

औपासनाग्निद्वयसंसर्गे तमग्निं द्वेधा विभज्य ममायमंशो ममायमंश इति द्वावपि प्रत्येकं अभिमानीकृत्य पूर्वहोता स्वांशे "अग्नये विवचयेस्वाहे"ति

हुत्वा प्रायश्चित्ताहुतीः जुहुयात् । पश्चाद्धोता स्वांशे "अग्नये विवचयेस्वाहा" "अग्नये पथिकृते स्वाहे"ति हुत्वा प्रायश्चित्ताहुतीः जुहुयात । ततस्तावुभौ सहैव समारोपयेताम ॥

औपासनाग्नेः लौकिकाग्निसंसर्गे—

औपासनाग्नेः लौकिकाग्निसंसर्गे "विविचि पाहि" पञ्चकं च जुहुयात् ॥

## ॥ भार्याद्वयाग्निसंसर्गः ॥

भार्यायां विद्यमानायां धर्मार्थं प्रजार्थं वा विवाहे कर्तव्ये पूर्वाग्नौ लौकिकाग्नौ वा विवाहहोमं कुर्यात् । लौकिकाग्नौ विवाहश्चेत् तयोरग्न्योः संसर्गं कुर्यात् । दक्षिणवामपार्श्वस्थाभ्यां ज्येष्ठाकनिष्ठाभ्यां सह औपासनाग्निद्वयसंसर्गं करिष्य इति संकल्प्य द्वितीयाग्निं प्रतिष्ठाप्य परिस्तीर्य आज्यं दर्वीं च संस्कृत्य परिषिच्य कनिष्ठपत्न्यान्वारब्धः प्रधानदर्व्यां इतरदर्व्याज्यं चतुर्था गृहीत्वा हुत्वा अयं ते योनिरिति समिधि समारोप्य "आजुह्वान" "उद्बुध्यस्वे"ति द्वाभ्यां पूर्वस्मिन् अग्नौ तां समिधमाधाय अग्निप्रतिष्ठाद्यग्निमुखान्ते पत्नीभ्यामन्वारब्धः घृतसूक्तेन अष्टावाहुतिं प्रत्याहुतिं च गृहीतं हुत्वा अग्नेरुत्तरतः प्रतिष्ठितामिधारितात् अन्नात् विधिवदवदाय "समितं सङ्कल्पेथा"मिति वाक्यद्वयं प्रणवान्तमुक्त्वा अग्ने पुरीष्येति वाक्यद्वयेन हुत्वा "पुरीष्यस्त्वमग्न" इत्याद्यनुवाकान्तं द्वाभ्यां द्वाभ्यां वाक्याभ्यां आज्याहुतीः हुत्वा स्विष्टकृदाद्यग्न्युपस्थानान्तं कृत्वा दक्षिणतो निविष्टाय ब्राह्मणाय गां दत्वा अग्नेः पुरस्तात् दर्भस्तम्बेषु ब्रह्मजज्ञानं पिता विराजामिति द्वाभ्यां हुतशेषमन्नं निदध्यात् । एवं संसृष्टेऽग्नावुभयोः पत्न्योः पुंसवनादि कर्म कुर्यात् ।

## ॥ संसृष्टाग्निविभागः ॥

अथवा संसृष्टाग्निविभागं करिष्य इति संकल्प्य तमग्निं प्रतिष्ठाप्य परिस्तीर्य आज्यं दर्वीञ्च संस्कृत्य परिषिच्य "सप्तते अग्न" इति पूर्णाहुतिं हुत्वा" अयं ते योनिर्ऋत्विय" इति तमग्निं द्वयोस्समिधोः युगपदारोप्य "अच्छा गिरो मतय" इति तमग्निं द्वेधा विभज्य "आजुह्वान" उद्बुध्यस्वेति द्वाभ्यां तयोरग्न्योः द्वे समिधावाधाय "अयाश्चाग्नेऽसि" इत्येतया व्याहृतिभिश्च "अनाज्ञात'मित्यादिभिश्च द्वयोरग्न्योः प्रत्येकं हुत्वा दक्षिणपार्श्वस्थेऽग्नौ ज्येष्ठायाः वामभागस्थेऽग्नौ कनिष्ठायाश्च पुंसवनादि कुर्यात् । पूर्वस्मिन्नग्नौ द्वितीयविवाहहोमेऽपि एवमेव विभागं कुर्यात् । बहुपत्नीकोऽप्येवमेव अग्नीनां संसर्गं विभागं च कुर्यात् ।

॥ इति प्रयोगचन्द्रिकायां सप्तदशः खण्डः ॥

## ॥ गृहारम्भप्रवेशौ ॥

गृहं प्रारभमाणः यो भूभागः आगारत्वेनाभिप्रेतः तन्नैर्ऋत्यां निम्नं यथा भवति तथा खनित्रादिना पांसूनुत्पाद्य पालाशेन शमीमयेन वा उदूहफलकेन "यद्भूमे क्रूरं" इत्येतया एतामेव दिशं मन्त्रमावर्त्य त्रिरुदूह्य "स्योना पृथिवी" इत्येतया तामभिमृश्य स्थूणानिखननार्थम् गर्तान् कर्मकारैः प्रदक्षिणं खादयित्वा अगारस्याभ्यन्तरं पांसूनुदूष्य निष्कामतो जनस्य दक्षिणपार्श्वस्थे गर्ते "इहैव तिष्ठ" "निमिते"त्येताभ्यां स्थूणामवधाय एताभ्यामेव सव्ये- अन्येष्वपि खननक्रमेण अन्या अपि स्थूणाः तूष्णीमवधाय दृढीकृत्वा ! (त्य) तासु स्थूणासु आधीयमानवंशं "ऋतेन-स्थूणावधिरोहे"त्यभिमन्त्र्य सम्यङ्निर्मितं गृहं गत्वा चतुर्दिक्षु मध्ये च स्थापिताः स्थूणाः प्राच्यादिक्रमेण तत्तदभि-

मुखः "ब्रह्म च ते क्षत्रं च" इत्यादिभिः पञ्चभिः अभिमन्त्र्य गृहप्रवेशं करिष्य इति सङ्कल्प्य पालाशैः शमीमयैर्वा काष्ठैः अग्निं प्रज्वाल्य तमग्निं "उद्ध्रियमाण" इत्येतया अह्निप्रवेशे, "रात्रिया यदेनः कृतं रात्रिप्रवेशे, "अह्ना यदेनः कृतं इत्यूहेन उद्धृतमग्निं "इन्द्रस्य गृहा" इति गृहं प्रपाद्य उत्तर-पूर्वे देशे "अमृताहुति"मित्येतया तमग्निं प्रतिष्ठापयेत् । एतस्मिन् काले अग्निहोत्रगृहे श्रौताग्नीनपि प्रतिष्ठापयेत् । औपासनाग्रे दक्षिणत नानादिग-ग्रान् दर्भान् सस्तीर्य तेषु "अन्नपत" इत्येतया द्रोणादन्नान् व्रीहीन् यवांश्च निक्षिप्य तेषूदकुम्भं निधाय अरिष्टा अस्माकमिति कुम्भचतुष्कजलेन प्रतिकुम्भमन्त्रमावृत्य कुम्भं पूरयेत् । भिन्ने यद्युदकुम्भे स्यात् 'भूमिर्भूमि-मगादिति तमनुमन्त्रयेत् । सर्वत्र मृण्मयं पात्रं एतेनानुमन्त्रयेत् । अथाग्नि-प्रतिष्ठाद्याज्यभागान्ते "वास्तोष्पते प्रतिजानीही"ति चतुर्भिः हुत्वा जयाद्यग्न्युप-स्थानान्तं कृत्वा पूर्वस्थापितं कुम्भं गृहीत्वा तेन कुम्भजलेन "शिवँशिव"मिति प्रागारभ्य प्रदक्षिणं निवेशनं गृहं वा सन्ततधारया त्रिः परिषिच्य अपूपसक्तुसहितं ब्राह्मणान् भोजयेत् ॥

एवं गर्भाधानादि गृहप्रवेशान्तानां कर्मणां प्रयोगः बहून् ग्रन्थानव-लोक्य तत्र स्थितानर्थान् संगृह्य एकत्र सुखबोधार्थं भगवत्कृपालब्धज्ञानबुद्धि-लेशेन मया तेनैव प्रेरितः तत्प्रीत्यर्थं यथामति यथाप्रज्ञ कृतः तस्मात् कामक्रोधे-र्ष्यादिदोषरहिता गुणग्राहिणो महान्तः कृतिमिमां प्रयोगचन्द्रिकां सम्यग्वीक्ष्य अत्रानुक्तदुरुक्ताधिकोक्तपुनरुक्तादिदोषान् सोढ्वा बालानां कलभाषणमिव मन्य-मानाः प्रमोदध्वम् । अनेन भगवान् प्रीणातु श्रियः पतिः श्रियः पतिः ।

॥ प्रयोगचन्द्रिकायां अष्टादशः खण्डः ॥

॥ इति प्रयोगचन्द्रिकायां षोडशः खण्डः ॥

श्रीमद्भिः कविकथककण्ठीरवगुरुभिः सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्यैः श्रीमद्वेङ्कटनाथैः विरचितनिजमततिरस्कारविगमा निरातङ्का इति बिरुदानां श्रीमद्भगवद्रामानुजभाष्ये पूर्वाचार्यास्संचिक्षिपुरिति पूर्वाचार्यत्वेन प्रसिद्धानां विशिष्टाद्वैतसिद्धान्तभाष्यकाराणां नैध्रुव माडपूशि आल्वानित्यपरनामधेयानां श्रीमद्द्रमिडाचार्याणां वंश्यनैध्रुवश्रीनिवासार्यसूनुना वीरराघवेण श्रीरामचन्द्रप्रसादेन विरचिता ॥

॥ प्रयोगचन्द्रिका सम्पूर्णा ॥

## ॥ अनुक्रमणिकाप्रारम्भः ॥

श्रीभूमिनीलासमेतं सीतारामं प्रणम्य, गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनोपाकर्मसोत्सर्जनचतुर्व्रतस्नातकोद्वाहगृहप्रवेशानां प्रयोगचन्द्रिकानुसारेण स्पष्टप्रतिपत्त्यर्थं समन्त्रकानुक्रमणिकां वक्ष्ये ॥

तत्र सर्वत्रादौ ब्राह्मणानुज्ञां विष्वक्सेनाराधनं भगवान् कर्म कारयतीत्यनुसन्धानं च कृत्वा तत्तत् कर्म कृत्वा अन्ते भगवदर्पणं कुर्यात् ।

॥ जातकर्मादीनां स्वस्वकालेष्वकरणप्रायश्चित्तम् ॥

पाणिपादं प्रक्षाल्य, द्विराचम्य, पवित्रपाणिः ताम्बूलनारिकेलाक्षतादि मङ्गलद्रव्यं गृहीत्वा–ओं नमस्सदसे नमस्सदसस्पतये–नमस्सखीनां पुरोगाणां चक्षुषे–नमो दिवे नमः पृथिव्यै–सप्रथ सभां मे गोपाय–ये च सभ्यास्सभासदः तानिन्द्रियावतः कुरु सर्वमायुरुपासतां–सर्वेभ्यः श्रीवैष्णवेभ्यो नमः,

स्वामिनः भवत्पादमूले मया समर्पितां इमां सौवर्णीं दक्षिणां, यत्किञ्चिदपि यथोक्तदक्षिणामिव स्वीकृत्य, अमुकगोत्रे अमुकनक्षत्रे जातस्य मम कुमारस्य जातकर्मनामकरणान्नप्राशनचौलोपनयनकर्मणां स्वस्वकालेष्वकरणप्रायश्चित्तं कर्तुं योग्यतासिद्धिमनुगृहाण, तथास्तु योग्यतासिद्धिरस्तु इत्यनुज्ञातः, दर्भेष्वासीनः, दर्भान् धारयमाणः, पवित्रपाणिः प्राणानायम्य, प्रारिप्सितस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं आदौ विष्वक्सेनाराधनं करिष्ये, ओं

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति सततं विष्वक्सेनं तमाश्रये ॥

करिष्यमाणस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं आदौ विष्वक्सेनाराधनं करिष्य इति सङ्कल्प्य, विष्वक्सेनाय नमः, ध्यायामि, आवाहयामि, आसनं समर्पयामि, पादयोः पाद्यं समर्पयामि, अर्घ्यं समर्पयामि, आचमनीयं समर्पयामि, "अपोहिष्ठा मयोभुवः—आपो जनयथा च नः-स्नापयामि, स्नानानन्तरमाचमनीयं समर्पयामि, वस्त्रं समर्पयामि, उपवीतं समर्पयामि, गन्धं समर्पयामि, पुष्पं समर्पयामि, धूपं समर्पयामि, दीपं समर्पयामि, एते गन्धाक्षतपुष्पधूपदीपोत्तरीयाभरणाद्यलङ्काराः सर्वोपचाराः । ओं भूर्भुवस्सुवरिति प्रोक्ष्य, "देव सवितः प्रसुव"ति परिषिच्य, विष्वक्सेनाय नमः गुडोपहारं निवेदयामि, आचमनीयं समर्पयामि, ताम्बूलं समर्पयामि, सर्वोपचारान् समर्पयामि ॥

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसो ।
अनन्तपुण्यफलदं अदश्शान्तिं प्रयच्छ मे ॥

इदं अमुकगोत्रस्य, अमुकनक्षत्रे जातस्य, अस्य कुमारस्य, जातकर्मनाम-करणान्नप्राशनचौलोपनयनकर्मणां स्वस्वकालेष्वकरणप्रायश्चित्तार्थं प्राजापत्य-कृच्छ्राणि यत्किञ्चिद्धिरण्यानि नानागोत्रेभ्यः श्रीवैष्णवेभ्यः तेभ्यस्तेभ्यः सम्प्रददे न मम, भूमौ साक्षतं सजलं हिरण्यं दत्वा ब्राह्मणेभ्यो दद्यात् ॥

## ॥ अथ प्रायश्चित्तहोमः ॥

स्थण्डिलं कल्पयित्वा–

प्राचीः पूर्वमुदक्संस्थं दक्षिणारम्भमालिखेत् ।
अथोदीचीः पुरस्संस्थं पश्चिमारम्भमालिखेत् ॥

अवाङ्करोऽभ्युक्ष्य, तृणं नैर्ऋत्यां निरस्य, अप उपस्पृश्य, अग्निं प्रतिष्ठाप्य, अथोक्षणतोयशेषं प्रागुदग्वोत्सिच्य प्राक्तोयमन्यन्निदधात्युदग्वा यथाबहिस्स्याच्च परिस्तरणाम् । प्रागग्रैः उदगग्रैः षोडशिभिः दर्भैः प्रागादिप्रदक्षिणं परिस्तीर्य, उत्तरानधरान् दक्षिणानुत्तरान् कृत्वा, अग्नेरुत्तरतो दर्भान् संस्तीर्य, तेषु दर्वीमाज्यस्थालीं प्रोक्षणीमितरदर्वीं च द्वंद्वं अवाञ्चि सादयित्वा, आयामतः परीमाणं प्रोक्षणीसंस्कारः पात्रप्रोक्ष इति पात्राण्युत्तानानि कृत्वा, सर्वाभिरद्भिः त्रिः प्रोक्ष्य, पुनश्चाद्भिरापूर्य, किञ्चिद्दक्षिणतो निधाय, पवित्रमाज्यस्थाल्यां निधाय, आज्यं विलाप्य, उदीचोऽङ्गारान्निरुह्य, तेष्वधिश्रित्य, ज्वलतातृणेनावद्योत्य, दर्भाग्रे प्रच्छिद्य प्रक्षाल्य युगपत्प्रत्यस्य, त्रिः पर्यग्नि कृत्वा, उदगुद्वास्य अङ्गारानग्नौ प्रत्यूह्य, उदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय, पवित्र-ग्रन्थि विस्रस्य, अप उपस्पृश्य, प्रागग्रमग्नौ प्रहरति । येन जुहोति तदग्नौ प्रतितप्य, दर्भैस्संमृज्य, पुनः प्रतितप्य, प्रोक्ष्य, दर्व्यौ निधाय, दर्भानद्भिस्सं-स्पृश्य, अग्नौ प्रहरति । अदितेऽनुमन्यस्व, अनुमतेऽनुमन्यस्व, सरस्वतेऽनु-

मन्यस्व, देव सवितः प्रसुव इति परिषिच्य, कुमारेणान्वारब्धः, प्रतिनिमित्तं प्रायश्चित्ताहुतीः जुहुयात्। "ओं भूः स्वाहा" अग्नय इदं, "ओं भुव स्वाहा" वायव इदं, "ओं सुवः स्वः स्वाहा" सूर्यायेदं, ओं भूर्भुवः सुवः स्वाहा" प्रजापतय इदं "अग्नेऽभ्यावर्तिन्नमि न आवर्तस्वायुषा वर्चसा सन्न्यामेधया प्रजया धनेन स्वाहा" अग्नये अभ्यावर्तिन इदं "अग्ने अङ्गिरः शतं ते संत्वावृतः सहस्रं त उपावृतः–तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमाकृधि स्वाहा अग्नये अभ्यावर्तिन इदं–"पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा पुनर्नः पाहि विश्वतः स्वाहा" अग्नये अभ्यावर्तिन इदं, "सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया–विश्वप्स्निया विश्वतः परि स्वाहा"–अग्नये अभ्यावर्तिन इदं, "पाहि नो अग्न एनसे स्वाहा" अग्नय इदं, "पाहि नो विश्ववेदसे स्वाहा" विश्ववेदस इदं, "यज्ञं पाहि विभावसो स्वाहा" विभावसव इदं, "सर्वं पाहि शतक्रतो स्वाहा" शतक्रतव इदं, "पाहि नो अग्न एकया पाह्युत द्वितीयया पाह्यूर्जं तृतीयया, पाहि गीर्भिः तिसृभिरुर्जां पतये, पाहि–चतसृभिर्वसो स्वाहा–अग्नय इदं, "अग्नेऽभ्यावर्तिन्नमिन आवर्तस्वायुषा वर्चसा सन्या मेधया प्रजया धनेन स्वाहा–अग्नये अभ्यावर्तिन इदं "अग्ने अङ्गिरश्शतं ते सन्त्वावृतः सहस्र त उपावृतः तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि स्वाहा–अग्नये अभ्यावर्तिन इदं, "पुनरूर्जानिवर्तस्व पुनरग्न इषायुषा। पुनर्नः पाहि विश्वतः स्वाहा–अग्नये अभ्यावर्तिन इदं- "सहरय्या निवर्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि स्वाहा–अग्नये अभ्यावर्तिन इदं, ओं भूः स्वाहा. अग्नय इदं ओं भुवः स्वाहा–वायव इदं, ओं सुवः स्वाहा–सूर्यायेदं–ओं भूर्भुवः सुवः स्वाहाप्रजापतय इदं न मम "त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽ

वया सिसीष्ठाः—यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत्स्वाहा" अग्नीवरुणाभ्यामिदं, "सत्वं नो अग्ने अवमो भवोतीं नेदिष्ठो अस्या उपसो व्युष्टौ—अवयक्ष्व नो वरुणं रराणो वीहि मृडीकँ सुहवो न एधि स्वाहा-अग्नी-वरुणाभ्यामिदं, त्वमग्ने अयास्ययासन्मनसा हितः—अयासन् हव्यमूहिषेऽयानो धेहि भेषजं स्वाहा—अग्नये अयस इदं उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमँ श्रथाय—अथा वयमादित्य व्रते तवानागसो अदितये स्वाहा वरुणायेदं, "ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितताः पुरुत्रा—तेभ्यो न इन्द्रस्सवितोत विष्णुर्विश्वेदेवा मुञ्चन्तु मरुतः स्वस्त्या स्वाहा—वरुणेन्द्रसवितृविश्वेदेवमरुद्भ्य इदं—एताः षड्विंशाहुतीर्जुहुयात् ॥

॥ अथवा ॥

व्यस्ताभिः समस्ताभिः व्याहृतिभिः पूर्वोक्तपाहिपञ्चकैः पुनः व्यस्ताभिः समस्ताभिः व्याहृतेभिरिति पाहित्रयोदशकैः त्वन्नो अग्ने, सत्वं नो अग्ने त्वमग्ने अयासि, उदुत्तमं, ये ते शतं, इत्येतैश्च वा जुहुयात् । प्राणानायम्य, अस्मिन् प्रायश्चित्तहोमकर्मणि मध्ये सम्भावितमन्त्रतन्त्रस्वरवर्णविधिविपर्यासन्यूनातिरिक्तप्रायश्चित्तार्थं सर्वप्रायश्चित्तहोमं होष्यामि—ओं भूर्भुवः सुवः स्वाहा प्रजापतय इदं; "अनाज्ञातं,यदाज्ञातं यज्ञस्य क्रियते मिथु—अग्ने तदस्य कल्पयत्वँ हि वेत्थ यथा तथं स्वाहा—अग्नय इदं, "पुरुषसम्मितो यज्ञ यज्ञः पुरुषसम्मितः—अग्ने तदस्य कल्पय त्वँ हि वेत्थ मथा तथँ स्वाहा—अग्नय इदं, "यत्पाकत्रा मनसा दीनदक्षान—यज्ञस्य मन्वते मर्तासः—अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवाँ ऋतुशो यजाति स्वाहा—अग्नय इदं, त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः—यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्स्वाहा—अग्नीवरुणाभ्यामिदं, "स त्वं नो अग्ने अवमो

भवोती नेदिष्ठो अस्या उषसो व्युष्टौ–अवयक्ष्व नो वरुणँ रराणो वीहि मृडीकँ सुहवो नं एधि स्वाहा–अग्नीवरुणाभ्यामिदं – आमिर्गोभिर्यदतो न ऊनं आप्याय हरि बो वर्धमानः–यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठ-भाजो अध ते स्याम स्वाहा–इन्द्राय हरिवत इदं–" इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं–समूढमस्य पाँसुरे स्वाहा–विष्णव इदं–ओं भूः स्वाहा अग्नय इदं, ओं भुवः स्वाहा, वायव इदं, ओं सुवः स्वाहा–सूर्यायेदं–ओं भूर्भुवः सुवः स्वाहा–प्रजापतय इदं, ओं विष्णवे स्वाहा–विष्णवे परमात्मन इदं प्राणानायम्य, अदितेऽन्वमँस्थाः, अनुमतेऽन्वमँस्थाः सरस्वतेन्वमँस्थाः देव सवितः प्रासावीः ओं श्रीविष्णवे स्वाहा–श्रीविष्णवे परमात्मन इदं– अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्–युयोध्यस्मज्जुहुराणमेनः भूयिष्ठां ते नम उक्तिं विधेम। अग्नये नमः। मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन। यद्धुतं तु मया देव परिपूर्णं तदस्तु ते। प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै। यानि तेषामशेषेण कृष्णानुस्मरणं परम्॥ प्रणम्याभिवाद्य, आचम्य, कृतं कर्म भगवते समर्पयेत्॥ अतीतं कर्म कुर्यात् ततः तात्कालिकं कर्म कुर्यात्॥

## ॥ अथोदकशान्तिप्रयोगः ॥

गर्भाधानादिषु पूर्वेद्युः तस्मिन् दिने वा उदकशान्तिः नमः सदस इत्यादि विष्वक्सेनाराधनान्तं कृत्वा, प्राणानायम्य, श्रीगोविन्देत्यादि–प्रीत्यर्थं एतत्कर्मसाद्गुण्यार्थं एभिः श्रीवैष्णवैः ब्राह्मणैः सह बोधायनोक्तप्रकारेण उदक-शान्तिजपकर्म करिष्यामीति सङ्कल्प्य, गोमयोपलिप्ते रङ्गवल्ल्याद्यलङ्कृते स्थण्डिले व्रीहीन् तण्डुलान् निक्षिप्य, तत्र मध्ये "ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमत-

स्सुरुचो वेन आवः—स बुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः। "नाके सुपर्णे उप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षतत्वा—हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्। इति दक्षिणतः, "आप्यायस्व समेतु ते विश्वतः सोम वृष्णियं—भवा वाजस्य सङ्गथे—इत्युत्तरतः, प्राचीः तिस्रो रेखाः "यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश। तस्मै रुद्राय नमो अस्तु—इति मध्ये, इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पाँसुरे—इति पश्चात्, इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः रथीतमँ रथीनां वाजानाँ सत्पतिं पतिम् इति पुरस्तात् उदीचीस्तिस्रो रेखाः लिखित्वा अद्भिरवोक्ष्य तत्र व्रीहीन्निक्षिप्य तत्र ब्रह्म जज्ञानं प्रथमं पुरस्तात्—विसीमतस्सुरुचो वेन आवः—स बुध्निया उपमा अस्य विष्ठास्सतश्च यो—निमसतश्च विवः—इति कुम्भं निधाय तस्मिन् गायत्र्या तिरः पवित्रं निधाय "आपो वा इदँ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽमृतमापोऽन्नमापस्सम्राडापो विराडापः स्वराडापश्छन्दाँस्यापो ज्योतीँष्यापस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवराप ओं" इत्यद्भिरापूर्य ऊर्ध्वाग्रं कूर्चं निक्षिप्य ओं भूर्भुवस्सुवरों इत्यक्षतान् निक्षिप्य गन्धाक्षतपुष्पैरलङ्कृत्य दूर्वापुष्पफलैरवकीर्य दूर्वादर्भैः प्रच्छाद्य " शन्नो देवीरभिष्टय आपो भवन्तु पीतये—शंयोरभिस्रवन्तु नः इत्यभिमृश्य सुप्रक्षालितपाणिपादैः स्वाचान्तैश्चतुर्दिक्ष्वासनेषु निषण्णैः चतुर्भिः ब्राह्मणैः सह प्राणायामं कृत्वा, कुम्भमन्वारभ्य, गायत्रीं पच्छोऽर्धर्चशः अनवानमुक्त्वा, वेदादीन् जपित्वा, "कृणुष्व पाज इत्यनुवाकं, मदेचिदस्येत्यर्धर्चमपोह्य. "इन्द्रं वो विश्वतस्परि हवामहे" इत्यनुवाकं, "यत इन्द्र स्वस्ति दा महाँ इन्द्र सजोषा इन्द्रे"ति चतस्रः, "ये देवाः पुरस्सदः" इति षड्, "अग्नये रक्षोघ्न" इति पञ्च, "अग्निरायुष्मा"निति पञ्च, "यावा-

मिन्द्रा वरुणे"ति चतुरः, "यो वामिन्द्रावरुणा"वित्यष्टौ पर्यायान्, "अग्ने यशस्विन्" इति चतस्रः, "ऋताषाडि"ति सानुषङ्गमनुवाकं, "नमो अस्तु सर्पेभ्य" इति तिस्रः, "अयं पुरो हरिकेश" इति पञ्च पर्यायान् "आशुरिशशानः" "शं च मे" "ममाग्ने" "अग्नेर्मन्वे" इत्यनुवाकान् "समीची नामासीति" षट्पर्यायान्, "हेतयो नामस्थे"ति षट्पर्यायान्, "शतायुधाये"ति पञ्चर्चः, "भूतं भव्यं भविष्यत्" इत्यनुवाकौ, इन्द्रो दधीच इत्यनुवाकौ,"चक्षुषो हे त आरभ्य भ्रातृव्यं पादयामसी"त्यन्तं "प्राणो रक्षति" "सिंहे व्याघ्रे" "अहमस्मि" "ता सूर्याः" "अग्निर्न" "श्रद्धया स्म" "नवो नव" इत्यनुवाकान्, "अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा" इत्याद्युपहोमान्, "दधिक्राव्ण" इत्यृच, "आपो हिष्ठा मयो भुव" इति तिस्रः, "उदुत्तम वरुण" "अस्तभ्नाद्या" "यत्किञ्चेद" "कितवासः" "अवते हेडः" तत्त्वायामी"ति वरुणसूक्तं, हिरण्यवर्णाः, पवमानः तच्छंयोः इत्यनुवाकान्, "यो ब्रह्मा ब्रह्मण" ति धृतसूक्तं, नमो ब्रह्मण इति परिधानीयां त्रिः जपित्वा, प्रणवेन कुम्भमुत्थाप्य, देवस्य त्वेति व्याहृतिभिश्च यजमान प्रोक्षयेत्। यजमानः पुरस्तादुपविष्टाय हिरण्य दक्षिणत उपविशते रजतं पश्चादुपविशते कांस्यमुत्तरत उपविशते वासश्च दक्षिणां दत्वा कुम्भजलेन स्नायात ॥

## अथ गर्भाधानम्

पत्न्यामृतुमत्यामृतुकाले आद्याश्चतस्रो रात्रीः विहायान्यासु द्वादशसु रात्रिषु शुभदिने कृतोपासनः—भुक्त्वा, भुक्तवत्या पत्न्या सह सुमनाः पाणिपादं प्रक्षाल्य, द्विराचम्य, ब्राह्मणाननुज्ञाप्य, विष्वक्सेनं सम्पूज्य, प्राणानायम्य, श्रीगोविन्देत्यादि अस्यां शुभतिथौ आवयोः सत्सन्तानसमृद्ध्यर्थं फलदानताम्बूलदानानि करिष्य इति सङ्कल्प्य, "फलं मनोरथफलं प्रददाति सदा

नृणां-पुत्रपौत्राभिवृद्ध्यर्थं अदश्शान्तिं प्रयच्छ मे" इति मन्त्रमुक्त्वा, आवयोः सत्सन्तानसमृद्धिं कामयमानः तुभ्यमहं सम्प्रददे न मम इति हिरण्यं ब्राह्मणेभ्यो दत्वा, पत्न्या सहासीनः त्रिः प्राणानायम्य, श्रीगोविन्देत्यादि अस्यां शुभतिथौ श्रीभगवदाज्ञया भगवत्प्रीत्यर्थं भगवत्कैङ्कर्यरूपं अमुकगोत्राममुकनाम्नीं मम धर्मपत्नीं गर्भाधानेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, "विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु-आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते-गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति-गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा । हिरण्मयी अरणी यन्निर्मन्थतो अश्विना-तं ते गर्भं हवामहे दशमे मासि सूतवे। यथेयं पृथिवी मही तिष्ठन्ती गर्भमादधे+एवं त्वं गर्भमाधत्स्व दशमे मासि सूतवे यथा पृथिव्यग्निगर्भा द्यौर्यथेन्द्रेण गर्भिणी-वायुर्यथा दिशां गर्भ एवं गर्भं दधामि ते-विष्णो श्रेष्ठेन रूपेणास्यां नार्यां गवीन्याम्-पुमाँसं गर्भमा धेहि दशमे मासि सूतवे-नेजमेष परापत स पुत्रः पुनरापत-अस्यै मे पुत्रकामायै गर्भ मा धेहि यः पुमान् । व्यस्य योनिं प्रति रेतो गृहाण पुमान् पुत्रो धीयतां गर्भो अन्तः-त माता दशमासोबिभ(र्तु) सजायतां वीरतमस्स्वानाम्-आते गर्भो योनिमेतु बाण इवेषुधिम्-आ वीरो जायतां पुत्रस्ते दशमास्यः-करोमि ते प्राजापत्यमा गर्भो योनिमेतु ते-अनूनः पूर्णो जायतामश्लोणोपिशाचधीतः-पुमाँस्ते पुत्रो नारितं पुमाननु जायताम्-तानि भद्राणि बीजान्यृषभा जनयन्तु नौ-यानि भद्राणि बीजान्यृषभा जनयन्ति नः-तैस्त्वं पुत्रान्विन्दस्व सा प्रसूर्धेनुका भव-काम (प्र) मृद्ध्यतां मह्यम पराजितमेव मे । यं कामं कामये देव तं मे वायो समर्धय ॥ इति गर्भाधानमन्त्रं जपित्वा, पत्न्या सह संविशेत् ॥

## ॥ अभ्युदयम् ॥

परेद्युः प्रातःकालिकनित्यकर्माणि औपासनान्तं कृत्वा, पत्न्या सह प्राणानायम्य, गर्भाधानकर्माङ्गमभ्युदयश्राद्धं करिष्य इति सङ्कल्प्य, अन्नेन आमेन हिरण्येन वा कुर्यात् । हिरण्यपक्षे—हिरण्यगर्भ—प्रयच्छ मे, इत्युक्त्वा, वसुसत्याख्यविश्वेभ्यो देवेभ्यः नान्दीमुखाभ्यः मातृपितामहीप्रपितामहीभ्यः, नान्दीमुखेभ्यः पितृपितामहप्रपितामहेभ्यः, नान्दीश्राद्धसंरक्षकश्रीमहाविष्णवे च इदं हिरण्यं निधाय—"यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताव्ययात्मा हरिरीश्वरोऽत्र । तत्सन्निधानादपयान्तु सद्यः रक्षांस्यशेषाण्यसुराश्च सर्वे" ॥ "एको विष्णुः महद्भूतं पृथग्भूतान्यनेकशः—त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः" । अनेन नान्दीमुखेन वसुसत्याख्यविश्वेदेवरूपी—नान्दीमुखमातृपितामहीप्रपितामहीरूपी, नान्दीमुखपितृपितामहप्रपितामहरूपी नान्दीमुखमातामहमातुःपितामहमातुःप्रपितामहरूपी, नान्दीश्राद्धसंरक्षकश्रीमहाविष्णुस्वरूपी, सर्वाकारो भगवान् स एव श्रीजनार्दनः प्रीयतामिति साक्षतं जलं हिरण्योपरि निनीय इदं हिरण्यं नानागोत्रेभ्यः श्रीवैष्णवेभ्यस्तेभ्यः सम्प्रददे न मम इति साक्षतं जलं निस्राव्य, ब्राह्मणेभ्यो दद्यात् ॥

## ॥ अथ पुण्याहम् ॥

तण्डुलोपरि सकूर्चं सपल्लवं, सोदकं सफलं कुम्भं निधायालङ्कृत्य, प्राणानायम्य, अस्यां शुभतिथौ, गोत्राया नाम्न्या मम धर्मपत्न्या, गर्भाधानकर्माङ्गं पुण्याहं वाचयिष्ये, इति संकल्प्य चतुरो ब्राह्मणान् भोजयित्वा, तण्डुलादि वा दत्वा, स्वामिनः मनस्समाधीयतामिति प्रार्थ्य, समाहितमनसः स्म इति तैः प्रत्युक्ते, प्रसीदन्तु भवन्त इति तान् पुनः प्रार्थ्य, प्रसन्नाः स्म इति तैः प्रत्युक्ते, ओं भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये, ओं वाच्यतामित्यनुज्ञाते,

कुम्भं वामहस्ते निधाय, दक्षिणहस्तेन पिधाय, कर्मणः पुण्याहं भवन्तो ब्रुवन्तु पुण्याहं कर्मणोऽस्तु, कर्मणे स्वस्ति भवन्तो ब्रुवन्तु, स्वस्ति कर्मणेऽस्तु कर्मण ऋद्धिं भवन्तो ब्रुवन्तु, कर्म ऋद्ध्यतामिति प्रार्थनाप्रतिवचने, त्रिस्त्रिः पूर्ववत् । कुम्भं निधाय, कस्मिँश्चित्पात्रे कूर्चेन किञ्चित् किञ्चित् अस्तुशब्देषु जलं निक्षिप्य, ओं ऋद्धिः, ओं समृद्धिः, पुण्याह समृद्धिः, शिवं कर्म, प्रजापतिः प्रीयतां, अस्तु प्रीयतां भगवान् प्रजापतिः ब्रह्मा, अस्त्विति ते ब्रूयुः, शान्तिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु, अविघ्नमस्तु, आयुष्यमस्तु, आरोग्यमस्तु, धनधान्यसमृद्धिरस्तु, गोब्राह्मणेभ्यः शुभं भवतु, ईशान्यां बहिर्देशे अरिष्टनिरसनमस्तु, आग्नेय्यां यत्पापं तत्प्रतिहतमस्तु, सर्वशोभनमस्तु, सर्वास्सम्पदः सन्तु—इति सर्वे सप्रणवं सह ब्रूयुः—ओं शान्तिः शान्तिश्शान्तिरिति नीतं पात्रस्थ जलं कुम्भे निस्राव्य, इमं मे वरुण, तत्त्वा यामीति द्वाभ्यां कुम्भे वरुणरूपिणं भगवन्तं आवाह्य आसनादिवीटिकान्तैरभ्यर्च्य, वरुणमुद्रास्य, कुम्भजलेन प्रोक्ष्य, हस्ते निनयेत् ॥

## ॥ अथ पुंसवनम् ॥

द्वितीये तृतीये वा मासे पुंसवनम् । चतुर्थे षष्ठेऽष्टमे वा मासे सीमन्तं तेन वा सह पुंसवनं कुर्यात् ॥

## ॥ प्रतिसरः ॥

पुंसवनसीमन्तोन्नयनकर्माङ्गं प्रतिसरबन्धं कृत्वा, अमुकगोत्राया अमुकनाम्न्याः मम धर्मपत्न्याः पुंसवनसीमन्तोन्नयनकर्माङ्ग–प्रतिसरबन्धकर्म करिष्यामि इति सङ्कल्प्य, उल्लेखनादिदर्भप्रच्छादनान्तं उदकशान्तिवत् कृत्वा, कुम्भस्योत्तरतो नवगुणितं गन्धानुलिप्तं कार्पासतन्तुं भस्म हरिद्राचूर्णाक्षत-

स्स्वन्यतमं च निधाय, शुचीभूतः वेदविद्भिः चतुर्भिः ब्राह्मणैः सह गायत्रीं वेदादींश्च जपित्वा, दधिक्राव्णण इत्यृचं, "आपो हिष्ठा मयो भुव" इति तिस्रः, हिरण्य-शुचयः पावकाः इति चतस्रः, "पवमानस्सुवर्जनः" "कृणुष्व पाजः" इत्यनुवाकौ, "अग्ने यशस्विन्" इति चतस्रः, "उदुत्तममित्यादि वरुणसूक्तं, "परिणो रुद्रस्य हेतिः" "स्तुहि श्रुतं" मीढुष्टम" "अर्हन् बिभर्षि" "त्वमग्ने रुद्र" "आवो राजानं" इति रुद्रसूक्तं, "ब्रह्मजज्ञानं" इति "ब्रह्म समिद्भवत्याहुतीनां" इत्यन्तं ब्रह्म सूक्तं, "विष्णोर्नुक" "तदस्य प्रियं" "प्रतद्विष्णुः" परो मात्रया" "विचक्रमे" "त्रिर्देव इति विष्णुसूक्तं, जातवेदसे सुनवामसोमं इति पञ्च, हिरण्यवर्णां हरिणीं इति पञ्चदशर्चं श्रीसूक्तं च जपित्वा, "नमो ब्रह्मणे" इति परिधानीयां त्रिर्जपित्वा ॥

## ॥ प्रतिसरजपमन्त्रः ॥

"दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः-सुरभि नो मुखाकरत् प्रण आयूंषि तारिषत-आपो हिष्ठा मयो भुवस्तान ऊर्जे दधातन-महेरणाय चक्षसे-यो वश्शिवतमो रसस्तस्य भाजयते ह नः-उशतीरिव मातरः तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ-आपो जनयथा च नः-"हिरण्यवर्णाश्शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः-अग्निं या गर्भं दधिरे विरूपास्तान आपश्शँस्योना भवन्तु-यासाँ राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानां—मधुश्चुतश्शुचयो याः पावकास्तान आपश्शँस्योना भवन्तु-यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवीं पयसोन्दन्ति शुक्रास्तान आपश्शँस्योना भवन्तु-शिवेन मा चक्षुषा पश्यतापश्शिवया तनुवोपस्पृशत त्वचं मे-सर्वाँ अग्नी ँरप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त।

पवमानःसुवर्जनः–पवित्रेण विचर्षणिः–यः पोता स पुनातु मा–पुनन्तु मा देवजनाः–पुनन्तु मनवो धिया–पुनन्तु विश्व आयवः–जातवेदः पवित्रवत्–पवित्रेण पुनाहि मा–शुक्रेण देव दीद्यत्–अग्ने क्रत्वा क्रतूँरनु–यत्ते पवित्रमर्चिषि–अग्ने विततमन्तरा–ब्रह्म तेन पुनीमहे–उभाभ्यां देव सवितः–पवित्रेण सवेन च–इदं ब्रह्म पुनीमहे–वैश्वदेवी पुनती देव्यागात्–यस्यै बह्वीः तनुवो वीतपृष्ठाः तया मदन्तस्सधमाद्येषु–वय स्याम पतयो रयीणाम् ॥

वैश्वानरो रश्मिभिर्मा पुनातु–वातः प्राणो नेपिरो मयोभूः–द्यावापृथिवी पयसा पयोभि–ऋतावरी यज्ञिये मा पुनीतां–बृहद्भिस्सवितस्तृभिः–वर्षिष्ठैर्देव मन्मभि–अग्ने दक्षैः पुनाहि मा–येन देवा अपुनत–येनापो दिव्यं कशः। तेन दिव्येन ब्रह्मणा ॥

इद ब्रह्म पुनीमहे–यः पावमानीरध्येति–ऋषिभिस्सम्भृतँ रसम्। सर्वं सपूतमश्नाति–स्वदितं मातरिश्वना–पावमानीर्यो अध्येति–ऋषिभिस्सम्भृतँ रसम्। तस्मै सरस्वती दुहे। क्षीरँ सर्पिर्मधूदक–पावमानीः स्वस्त्ययनीः ॥

सुदुघा हि पयस्वतीः–ऋषिभिस्सम्भृतो रसः–ब्राह्मणेष्वमृतँ हितं–पावमानीर्दिशन्तु नः–इमं लोकमथो अमुं–कामान्थ्समर्धयन्तु नः–देवीर्देवैस्समाभृताः–पावमानीः स्वस्त्ययनीः–सुदुघा हि घृतश्च्युतः–ऋषिभिस्सम्भृतो रसः ॥

ब्राह्मणेष्वमृतँ हितम्। येन देवा पवित्रेण–आत्मनं पुनते सदा–तेन सहस्रधारेण–पावमान्यः पुनन्तु मा–प्राजापत्यं पवित्रम्। शतोद्यामँ हिरण्मयम् तेन ब्रह्मविदो वयम्–पूतं ब्रह्म पुनीमहे–इन्द्रस्सुनीती सह मा पुनातु–सोमस्स्वस्त्या वरुणस्समीच्या–यमो राजा प्रमृणाभिः पुनातु मा–जातवेदा मोर्जयन्त्या पुनातु ॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन। त्रिष्वी-मनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः। तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः। तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज-विष्वगुल्काः। प्रतिस्पशो विसृज तूर्णितमो भवापायुर्विशो अस्या अदब्धः। यो नो दूरे अघशँसः।

यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत्। उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्रां ओषतात्तिग्म हेते। योनो अरातिं समिधान चक्रे नीचा तं धक्ष्यत-सन्न शुष्कम्। ऊर्ध्वो भव प्रतिविद्ध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने। अवस्थिरा तनुहि यातु जूनां जामिमजामिं प्रमृणीहि शत्रून्। सते—

जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत्। विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो विदुरो अभिद्यौत्। सेदग्ने अस्तु सुभग-स्सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः। पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः—अर्चामि ते सुमतिं घोष्यर्वाक्सन्ते वावात जरताम् इयं गीः। स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून्। इह त्वा भूर्या चरेदुपत्मन्दोषावस्तर्दीदिवाँसमनुद्यून्। क्रीडन्तस्त्वा सुमनस-स्सपेमाभिद्युम्ना तस्थिवाँसो जनानाम्। यस्त्वा स्वश्वस्सुहिरण्यो अग्न उप-याति वसुमता रथेन। तस्य त्राता भवसि तस्य सखा यस्त आतिथ्य-मानुषग्जुजोषत्। महो रुजामि।

बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय। त्वन्नो अस्य वचसश्चि-किद्धि होतर्यविष्ठ सुक्रतोदमूनाः। अस्वप्नजस्तरणयस्सुशेवा अतन्द्रास ऽवृका अश्रमिष्ठाः। ते पायवस्सध्रियञ्चो निषद्याग्ने तव नः पान्त्वमूर। ये पायवो

माम ते यन्ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् । ररक्ष तान् सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह ॥

देभुः । त्वया वयँ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभाशँसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण । अया ते अग्ने समिधा विधेम प्रतिस्तोमँ शस्यमानं गृभाय । दहाशसो रक्षसः पाह्यस्मान् द्रुहोनिदो मित्रमहो अवद्यात् । रक्षोहण वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिस्समिद्धस्स नो दिवा ॥

सरिषः पातु नक्तम । विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्मायास्सहते दुरेवाश्शिशीते शृङ्गे रक्षसे विनिक्षे । उत स्वानासो दिविषन्त्वग्नेस्तिग्मायुधा रक्षसे हन्त वा उ ।

अग्ने यशस्विन् यशसेममर्पयेन्द्रावनीमपचितीमिहावह । अयं मूर्धा परमेष्ठी सुवर्चास्समानानामुत्तमश्लोको अस्तु । भद्रं पश्यन्त उपसेदुरग्रे तपो दीक्षामृषयस्सुवर्विदः । ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभि सन्नमन्तु । धाता विधाता परमोत सन्दृक् प्रजापतिः परमेष्ठी विराजा । स्तोमाश्छन्दाँसि निविदोम आहुरेतस्मै राष्ट्रमभिसन्नमाम । अभ्यावर्तध्वमुप-मेत साकमयँ शास्ताधिपतिर्वो अस्तु । अस्य विज्ञानमनु सँरभध्वं इमं पश्चादनुजीवाथ सर्वे ॥

उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमँश्रथाय । अथा वयमा-दित्यव्रते तवानागसो अदित ये स्याम"। "अस्तभ्नाद्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि।

"यत्किञ्चेदं वरुण दैव्ये जनेभिद्रोहं मनुष्याश्चरामसि। अचीत्तीयत्तव धर्मा युयोपिम मानस्तस्मादेनसो देवरीरिषः। कितवासो यद्रिरिपुः न दीवि यद्वाघा सत्यमुत यन्न विद्म। सर्वा ताविष्य शिथिरेव देवाथा ते स्याम वरुणप्रियासः"। "अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाँसि शिश्रथः कृतानि। तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोद्ध्युरुशँस मान आयुः प्रमोषीः"॥

"परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतिरघायोः। अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय। स्तुहि श्रुतं गर्तसदं युवानं मृगन्न भीममुपहत्नुमुग्रम्- मृडा जरित्रो रुद्रस्तवानो अन्यन्ते अस्मिन्निवपन्तु सेनाः। मीदुष्टम शिवतम शिवोनस्सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं विभ्रदागहि-अर्हन् बिभर्षि सायकानि धन्व-अर्हन्निष्कं यजतं विश्वरूपं-अर्हन्निदं दयसे विश्वमब्भुवं-न वा ओजीयो रुद्र त्वदस्ति। त्वमग्ने रुद्रो असुरो महो दिवः। त्वँ शर्धो मारुतं पृक्ष ईशिषे। त्वं वातैररुणैर्यासि शङ्गयः। त्वं पूषा विधतः पासि नु त्मना। आवो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः। अग्निं पुरा तनयित्नो-रचित्ताद्धिरण्यरूपमवसे कृणुध्वम॥

'ब्रह्मजज्ञानं प्रथमं पुरस्तात्-विसीमतः सुरुचो वेन आवः। स बुध्निया उपमा अस्य विष्ठाः। सतश्च योनिमसतश्च विवः। पिता विराजामृषभो रयीणाम्-अन्तरिक्षं विश्वरूप आविवेश। तमर्कैरभ्यर्चन्ति वत्सं। ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः। ब्रह्म देवानजनयत्। ब्रह्म विश्वमिदं जगत्।

ब्रह्मणः क्षत्रं निर्मितं । ब्रह्म ब्राह्मण आत्मना । अन्तरस्मिन्निमे लोकाः । अन्तर्विश्वमिदं जगत् । ब्रह्मैव भूतानां ज्येष्ठं । तेन कोऽर्हति स्पर्धितुं । ब्रह्मन्देवास्त्रयस्त्रिँशत् । ब्रह्मन्निन्द्रप्रजापती । ब्रह्मन्ह विश्वा भूतानि । नावी वान्तस्समाहिता । चतस्र आशाः प्रचरन्त्वग्नयः । इमं नो यज्ञं नयतु प्रजानन् । घृतं पिन्वन्नजरँ सुवीरम् । ब्रह्म समिद्भवत्याहुतीनाम ॥

"विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाँसि यो अस्कभायदुत्तरँ सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णो रराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रे स्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा" ॥

तदस्य प्रियमभिपाथो अश्याम् । नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः । प्रतद्विष्णुस्तवते वीर्याय । मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा । परो मात्रया तनुवा वृधान । न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वम् । परमस्य वित्से । विचक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनासः । उरुक्षितिँ सुजनिमा चकार । त्रिर्देवः पृथिवीमेष एताम् । विचक्रमे शतर्चसं महित्वा । प्रविष्णुरस्तु तवसस्तवीयान् त्वेषँह्यस्य स्थविरस्य नाम । "जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । सनः पर्षदति दुर्गाणि विश्वा नावेव सिन्धु दुरितात्यग्निः । तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम । दुर्गां देवीँ शरणमहं प्रपद्ये सुतरसि तरसे नमः । "अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः ।

"विश्वानिनो दुर्गहा जातवेदस्सिन्धुं न नावा दुरितातिपर्षि"। अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोद्ध्यविता तनूनाम्। "पृतनाजितँ सहमानमग्निमुग्रँ हुवेम परमाथ्सधस्थात्—सनः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अतिदुरितात्यग्निः ॥

## ॥ अथ श्रीसूक्तम् ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह। तां म आवह जातवेदो लक्ष्मीमनपगामिनीं। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहं। अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्। श्रियं देवीमुपह्वये श्रीर्मा देवी जुषतां। कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां त्वामिहोपह्वये श्रियम्। चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रिये लोके देवजुष्टामुदाराम्। तां पद्मनेमीँ शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे। आदित्यवर्णेतपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः। उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे। क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीनाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्। गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्। मनसः काममाकूतिं वाचस्सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः। कर्दमेन प्रजा भूता मयि सम्भव कर्दमा। श्रियं वासय मे कुले। आर्द्रां पुष्करिणीं यष्टिं पिङ्गलां पद्ममालिनीं। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह। आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीं। सूर्यां

हिरण्मयीं लक्ष्मीं जातवेदो ममावह । तां म आवह जातवेदो लक्ष्मीमनपगामिनीं। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥

" नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि । इत्येतामृचं त्रि जपेत् ॥

प्रणवेन कुम्भमुत्थाप्य, कूर्चेन व्याहृतिभिः प्रतिसरसूत्रं कुम्भजलेन प्रोक्ष्य, वामहस्तेन सूत्रं गृहीत्वा, वासुकिं ध्यात्वा, दक्षिणहस्तेन "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । इति सकृन्मन्त्रेण द्विस्तूष्णीं हरिद्रादिना त्रिरुन्मृज्य अग्निरायुष्मान्त्स "वनस्पतिभिरायुष्मान्तेन त्वायुषायुष्मन्तं करोमि, सोम आयुष्मान्त्स ओषधीभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि, यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मान् तेन त्वायुषायुष्मन्तं करोमि, ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषाऽयुष्मन्तं करोमि, देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि ॥ इति तण्डुलपूर्णं पुंसः दक्षिणं स्त्रिया वामहस्तं गृहीत्वा—

" बृहत्साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजश्शुभितमुग्रवीरम् । इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं व तेन सगरेण रक्ष" । इति बध्वा—

" यो ब्रह्मा ब्रह्मण उज्जहार प्राणैश्शिरः कृत्तिवासाः पिनाकी-ईशानो देवस्स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन । विभ्राजमानस्सरिरस्य मध्याद्रोचमानो धर्मरुचिर्य आगात । स मृत्युपाशादपनुद्य घोरादिहायुषे वर्धयामो घृतेन । दाक्षायण्यस्सर्वयोन्यस्सयोन्यः सहस्रशो विश्वरूपा विरूपाः ।

ससूनवस्सपतयः सबृध्या आयुर्वेणो घृतमिदं जुषन्तां। दिव्या गणा बहुरूपाः पुराणा आयुश्छिदेनः प्रमथ्नन्तु वीरान्। तेभ्यो जुहोमि हविषा घृतेन मानः प्रजां रीरिषो मोत वीरान्। एकः पुरस्ताद्य इदं बभूव यतो बभूवुर्भुवनस्य गोपाः। यमप्येति भुवनं साम्पराये स नो हविर्घृतमिहायुषेत्तु देवः। ब्रह्म ज्योतिर्ब्रह्मपत्नीषु गर्भं यमादधात्पुरुरूपं जयन्तं। सुवर्णरम्भग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन। श्रियं लक्ष्मीमौबलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः। तां विद्यां ब्रह्मयोनिं सरूपामिहायुषे तर्पयामो घृतेन। वसून् रुद्रानादित्यान्मरुतोऽथ साद्ध्यान् ऋभून् यक्षान् गन्धर्वांश्च पितॄंश्च विश्वान् भृगून्थर्पाँश्चाङ्गिरसोऽथ सर्वान्। घृतं हुत्वा स्वायुष्या महयाम शश्वत्। "विष्णो त्वन्नो अन्तमश्शर्म यच्छ सहन्त्य। प्रते धारा मधुश्चुत उत्सं दुह्रते अक्षितं।" इति रक्षां कृत्वा, विवाहाधानयोस्तु पुंसां दक्षिणे हस्ते "विश्वेत्तात" इति बद्ध्वा, स्त्रीणां वामहस्ते "बृहत्सामेति बध्नीयात्। उत्सवान्ते सायं सन्ध्यायां बन्धनमन्त्रेण तत्सूत्रं विसृज्य, परित्यजेत्॥

प्राणानायम्य, श्रीगोविन्देत्याद्यस्यां शुभतिथौ गोत्रां नाम्नीं पुंसवनेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, अग्निप्रतिष्ठादिपात्रसादनकाले—

## ॥ अग्निप्रतिष्ठा ॥

यत्राग्निस्थापनं तत्रोदगपवर्गं प्राचीः, प्रागपवर्गं उदीचीः, तिस्रो रेखाः दर्भादिना लिखित्वा, तत्र न्यस्याद्भिरवोक्ष्य, दर्भादिकं नैरृत्यां निरस्याप उपस्पृश्य, तत्राग्निं प्रतिष्ठाप्य, याज्ञियैरिन्धनैः प्रज्वाल्य, परिसमूह्य अवोक्षणशेषं प्रागुदग्वोत्सृज्य अन्यजलं पात्रे प्रागुदग्वा यथा परिस्तरणाद्बहिः स्यात्तथा निधाय, प्रागुदगग्रान् षोडश षोडश दर्भान् अग्नेः प्रागारभ्य प्रदक्षिणं

परिस्तीर्य, दक्षिणानुत्तरान् उत्तरानधरान् कृत्वा, अग्नेरुत्तरतो दर्भान् संस्तीर्य, तेषु दर्व्याज्यस्थाल्यौ, तत्पुरस्तात् प्रोक्षणीपात्रप्रणीतिपात्रे, तत्पुरस्तादरत्निमात्रं परिधित्रयं, प्रादेशमात्राः सप्तदशसमिधश्च दर्भैस्सन्नह्य, इध्मापरदर्व्यौ द्वंद्वमवांञ्चि सादयेत्। शल्लीमौञ्जीलाजादींश्च सर्वान् युगपदेव देवयात्रोत्तरतस्सादयेत्। समावप्रच्छिन्नाग्रौ प्रादेशमात्रौ दर्भौ काष्टादिना छित्वा, अप उपस्पृश्य, मूलादारभ्याग्रादद्भिरनुमृज्य, पवित्रे कृत्वा, अग्नेः पश्चात् प्रोक्षणीपात्रे निधाय, तस्मिन्नप आनीयोत्तानयोरुदक् प्रागग्रयोः दक्षिणवामयोः पाण्योरङ्गुष्ठानामिकाभ्यां पवित्रमूलाग्रे गृहीत्वा, प्रागपवर्गं त्रिरुत्पूय, पात्राण्युत्तानानि कृत्वा, विस्रस्येध्मं, सर्वाभिस्ताभिरद्भिः पवित्रपाणिस्त्रिः प्रोक्ष्य, सपवित्रे प्रणीतिपात्रे अप आनीय, पूर्ववदुत्पूय, हस्ताभ्यां घ्राणसमं उद्धृत्य, पात्रसादनादुत्तरतो दर्भेषु सादयित्वा, दर्भैः प्रच्छाद्य, अग्नेर्दक्षिणतो दर्भेषु ब्राह्मण निषाद्य, विलीनमप्याज्यं होमार्थेऽग्नौ विलाप्य अग्नेः पश्चात् सपवित्रायामाज्यस्थाल्यां आज्यं निरुप्य, परिस्तरणपात्रसादनयोः मध्ये अङ्गारान्निरुह्य, तेष्वधिश्रित्य, ज्वलता दर्भेणोल्मुकेन वाज्यमवद्योत्य, द्वे दर्भाग्रे काष्ठादिना छित्वा, अप उपस्पृश्य, युगपदाज्ये प्रत्यस्य, प्रागादिप्रदक्षिणं त्रिः पर्यग्निकृत्वा, उदगुद्वास्य अङ्गारान् प्रत्यूह्य, आज्यस्थालीं स्वस्य पुरस्तान्निधाय, पूर्ववत् पवित्रे गृहीत्वा, प्रागारभ्य, पुनः पुनराहृत्य, त्रिरुत्पूय, पवित्रं विस्रस्य अद्भिस्संस्पृश्य, युगपदग्नौ प्रहृत्य, दर्व्यावग्नौ प्रतितप्य, दर्भैः सम्मृज्य, पुनः प्रतितप्य, प्रोक्ष्य निधाय, दर्भानद्भिस्संस्पृश्याग्नौ प्रहृत्य, पुंसवनोपाकर्मव्रतगृहप्रवेशेषु चरुकर्मसु च परिधीन् परिदध्यात्। अन्यत्र सीमन्तादिषु पलाशखादिरादीनां अन्यतमेन कृतान् परिधिस्थौल्यायामान् शम्याख्यान् युगकीलान् परिदधाति। तत्र स्थूलमुदगग्रं पश्चात्, अणु दीर्घं दक्षिणतः, अणु ह्रस्वमुत्तरतः, परिस्तरणोपरि

अन्योन्यसंस्पृष्टान् निधाय, मध्यमं परिधिं उपस्पृश्य, अग्नेर्दक्षिणपूर्वोत्तर-पूर्वयोः आघारसमिधौ उर्ध्वे क्रमात् निधाय, सव्येन पात्रं स्पृशन्, दक्षिणेन हस्तेन परिध्यन्तः परिस्तरणोपरि, अदितेऽनुमन्यस्व इति दक्षिणतः प्रागपवर्गं, अनुमतेऽनुमन्यस्वेति पश्चादुदगपवर्गं, सरस्वतेनुमन्यस्वेत्युत्तरतः प्रागपवर्गं, देव सवितः प्रसुवेति प्रागारभ्य प्रदक्षिणमग्निं परिषिच्य अग्निमलङ्कृत्य, आज्याभ्यक्तमिध्यमूलमध्ययोर्मध्यं मृगमुद्रया गृहीत्वा, ब्राह्मणानुज्ञया प्रजापतिं स्मरन्, अग्नावाधाय अप उपस्पृश्य, कराभ्यामिध्यमूलं परामृश्य, सव्येनाज्य-स्थालीं स्पृशन्, उत्तरपरिधिसन्धिमारभ्याग्नेयान्तमुपदर्व्या, दक्षिणं परिधि-सन्धिमारभ्यैशानान्तं, प्रधानदर्व्याज्येन दीर्घधारया सर्वाणीध्मकाष्ठानि संस्पर्शयन्, स्वाहाकारवर्जमाघारहोमौ जुहुयात। पूर्वस्य प्रजापतिरुत्तरस्येन्द्रो देवता। अथ "अग्नये स्वाहा" इत्युत्तरार्धपूर्वार्धे, "सोमाय स्वाहेति" दक्षिणार्धपूर्वार्धेऽथ आज्यभागौ जुहुयात्। पुंसवनादिष्वग्नये स्वाहेति पुन-रेकामाज्याहुतिं मध्ये जुहुयात्। विवाहे हिरण्यायां पश्चिमजिह्वायां, जातकर्मणि कनकायां मध्यमजिह्वायां, उपनयने रक्तायां उत्तरजिह्वायां, पितृकार्ये कृष्णायां दक्षिणजिह्वायां, सर्वदेवार्थं सुप्रभायां पूर्वजिह्वायां, शान्तिकर्मणि अतिरिक्तायां ईशान्यदिक्स्थितायां, तिलहोमे बहुरूपायामाग्नेय्यां तत्तत्प्रधानाहुतीः जुहुयात॥

## ॥ पुंसवने तु ॥

दर्वीमाज्यस्थालीं प्रोक्षणीं प्रणीतीमिध्ममितरदर्वीं द्वन्द्वमवाक्षि सादयित्वा, न्यग्रोधस्य या प्राच्युदीची वा शाखा तत आहृतं फलद्वयसहितं अङ्कुरं दलत्पुत्रद्वयं नवं वस्त्रं च युगपत्सादयित्वा अग्निमुखान्ते पत्न्यान्वारब्धः "धाता ददातु नो रयिमीशानो जगतस्पतिः। स नः पूर्णेन वावनत् स्वाहा।

धात्र इदं—"धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान। धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम स्वाहा। धात्र इदं-" धाता ददातु नो रयिं प्राचीं जीवातुमक्षितां। वयं देवस्य धीमहि सुमतिँ सत्यराधसः स्वाहा। धात्र इदं-" धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे। तस्मै देवा अमृतास्संव्ययन्तां विश्वे देवासो अदितिस्सजोषाः स्वाहा। धात्र इदं—"यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि। जातवेदो यशो अस्मासु धेहि। प्रजाभिरग्ने अमृतत्वमश्याँ स्वाहा। अग्नये पुत्रवत इदं—"यस्मै त्वँ सुकृते जातवेद उलोकमग्ने कृणवस्स्योनं। अश्विँन सपुत्रिणं वीरवन्तं गोमन्तँ रयिन्नशते स्वस्ति स्वाहा। अग्नये पुत्रवत इदं"—"त्वे सुपुत्र शवसो वृत्रन् कामकातयः। न त्वामिन्द्रातिरिच्यते स्वाहा। इन्द्राय पुत्रिण इदं—उक्थ उक्थे स म इन्द्रं ममाद नीथे नीथे मघवानँ सुतासः। यदीं सबाधः पितरं न पुत्रास्समानदक्षा अवसे हवन्ते स्वाहा। इन्द्राय पुत्रिण इदं-प्राणानायम्य, एतत्कर्मसमृद्ध्यर्थं जयादिहोमं करिष्ये—"ओं चित्तं च स्वाहा-चित्तायेदं-चित्तिश्च स्वाहा-चित्या इदं-आकूतं च स्वाहा-आकूतायेदं-आकूतिश्च स्वाहा-आकूत्या इदं-विज्ञातं च स्वाहा-विज्ञातायेदं-विज्ञानं च स्वाहा-विज्ञानायेदं-मनश्च स्वाहा-मनस इदं-शक्वरीश्च स्वाहा-शक्वरीभ्य इदं। दर्शश्च स्वाहा-दर्शायेदं। पूर्णमासश्च स्वाहा-पूर्णमासायेदं। बृहच्च स्वाहा-बृहत इदं रथन्तरं च स्वाहा-रथन्तरायेदं। प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशस्समनमन्त सर्वास्स उग्रस्सहि हव्यो बभूव स्वाहा—प्रजापतय इदं। अग्निर्भूतानामधिपतिस्स मावत्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याँ स्वाहा-अग्नय इदं। इन्द्रो

ज्येष्ठानामधिपतिस्समावतु–अस्मिन्–देवहूत्याँ स्वाहा–इन्द्रायेदं। यमः पृथिव्या अधिपतिस्समावत्वस्मिन् त्याँ स्वाहा–यमायेदं। वायुरन्तरिक्षस्याधिपतिस्समावत्वस्मिन्—त्याँ स्वाहा–वायव इदं। सूर्यो दिवोऽधिपतिस्समावत्वस्मिन् त्याँ स्वाहा–सूर्यायेदं। चन्द्रमा नक्षत्राणामधिपतिः—स्वाहा चन्द्रमस इदं। बृहस्पतिर्ब्रह्मणोऽधिपतिस्समावत्वस्मिन्–स्वाहा–बृहस्पतय इदं। मित्रस्सत्यानामधिपतिस्समावत्वस्मिन्–स्वाहा–मित्रायेद। वरुणोऽपामधिपतिस्समावत्वस्मिन् स्वाहा-वरुणायेदं। समुद्रस्स्रोत्यानामधिपतिस्समावत्वस्मिन्–स्वाहा समुद्रायेदं। अन्नँ साम्राज्यानामधिपति तन्मावत्वस्मिन्–स्वाहा–अन्नायेद। सोम-ओषधीनामधिपतिस्समावत्वस्मिन्–स्वाहा–सोमायेदं। सविता प्रसवानामधिपतिस्समावत्वस्मिन्–स्वाहा–सवित्र इदं। रुद्रः पशूनामधिपतिस्समावत्वस्मिन् स्वाहा–रुद्राय पशुपतय इदं। अप उपस्पृश्य–त्वष्टा रूपाणामधिपतिस्समावत्वस्मिन्–स्वाहा–त्वष्ट्र इदं। विष्णुः पर्वतानामधिपतिस्समावत्वस्मिन्—स्वाहा - विष्णव इदं। मरुतो गणानामधिपतयस्ते मावन्त्वस्मिन्–स्वाहा–मरुद्भ्य इदं। पितरः पितामहाः परेवरे ततास्ततामहा इहमावत–अस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायां अस्मिन्कर्मन्नस्यां देवहूत्यां स्वाहा पितृभ्यः पितामहेभ्य इदं। अप उपस्पृश्य, ऋताषाडृतधामाग्निर्गन्धर्वः तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा–अग्नये गन्धर्वायेदं। ताभ्यः स्वाहा–ओषधीभ्योऽप्सरोभ्य इदं। सँहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम स इदं ब्रह्म–स्वाहा–सूर्याय गन्धर्वायेदं। ताभ्यः स्वाहा–मरीचिभ्योऽप्सरोभ्य इदं। सुषुम्नस्सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो वेकुरयो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं–स्वाहा–चन्द्रमसे गन्धर्वायेदं–ताभ्यः स्वाहा

नक्षत्रेभ्योऽप्सरोभ्य इदं। भुज्युस्सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तवा नाम स इदं ब्रह्म क्षत्रं पातु ता इदं–स्वाहा–यज्ञाय गन्धर्वायेदं। ताभ्यस्स्वाहा–दक्षिणाभ्योऽप्सरोभ्य इदं। प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयो नाम स इदं–स्वाहा–मनसे गन्धर्वायेदं-ताभ्यः स्वाहा–ऋक्सामेभ्योऽप्सरोभ्य इदं। इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा नाम स इदं–स्वाहा–वाताय गन्धर्वायेदं–ताभ्यः स्वाहा—अद्भ्योऽप्सरोभ्य इदं। भुवनस्य पते यस्य त उपरि गृहा इह च। स नो रास्वाज्यानिँ रायस्पोषँ सुवीर्यँ संवत्सरीणाँ। स्वस्ति स्वाहा–भुवनस्य पत्य इदं। परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवो नाम स इदं स्वाहा–मृत्यवे गन्धर्वायेदं–ताभ्यः स्वाहा–विश्वस्मा अप्सरोभ्य इदं। सुक्षितिस्सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो नाम स इदं ब्रह्म–स्वाहा–पर्जन्याय गन्धर्वायेदं ताभ्यः स्वाहा–विद्युद्भ्योऽप्सरोभ्य इदं दूरे हेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवो नाम स इदं ब्रह्म–स्वाहा–मृत्यवे गन्धर्वायेदं–ताभ्यः स्वाहा–प्रजाभ्योऽप्सरोभ्य इदं। चारुः कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसश्शोचयन्तीर्नाम स इदं ब्रह्म–स्वाहा कामाय गन्धर्वायेदं ताभ्यः स्वाहा–आधिभ्योऽप्सरोभ्य इदं। स नो भुवनस्य पते यस्य त उपरि गृहा इह च। उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा–भुवनस्य पत्ये ब्रह्मण इदं। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव–यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणां स्वाहा प्रजापतय इदं। ओं भूः स्वाहा–अग्नय इदं। ओं भुवः स्वाहा–वा[illegible] इदं। ओं सुवः स्वाहा–सूर्यायेदं। यदस्य कर्मणोऽत्यरीरिचं [illegible] मिहाकरं। अग्निष्टत्स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु [illegible] यद्वा न्यून-

[illegible] स्वाहा–अग्नये–

स्विष्टकृत इदं–परिद्धयञ्जनं, परिधिप्रहरणं, संस्रावः, प्राणायामः, पुंसवनहोम-कर्मणि मध्ये सं-त्तप्रायश्चित्तार्थं सर्वप्रायश्चित्तहोमं होष्यामि–"ओं भूर्भुवः सुवः स्वाहा–प्रजापतय इदं–अनाज्ञातादिहोमः, प्राणायामः, परिषेचनं, प्रणीतावोक्षणं, ब्रह्मोद्वासनं, यस्या रजः-प्रादुर्भावो न स्यात् तया कन्यया न्यग्रोधस्याङ्कुरं दृषत्पुत्रे न्यस्य, दृषत्पुत्रेण पेषयित्वा, नववस्त्राञ्चलेन गृहीत्वा. अग्नेः पश्चात् प्राक्शिरस्कामूर्ध्वमुखीं पत्नीं शाययित्वा, स्वयं प्राङ्मुखः स्थित्वा दक्षिणेनाङ्गुष्ठेन तस्या दक्षिणे नासिकाच्छिद्रे तद्रसं पुँसवनमसीति निनयेत्। सा तद्रसं निगिरेत्। पुंसवनकर्मणः अभ्युदयस्य पश्चात् कर्तव्यत्वात् सीमन्तस्य पूर्वं कर्तव्यत्वात्, पुंसवनसीमन्तयोः सहकरणे पुंसवनानन्तरं पुंसवनसीमन्तोन्नयनकर्माङ्गं सकृदेव अभ्युदयं प्रत्येकं पुण्याहं च कुर्यात्।

## ॥ सीमन्तम् ॥

पुंसवनसीमन्तोन्नयनयोः सहाकरणे सीमन्तोन्नयनकर्माङ्गं प्रतिसरमभ्युदयं पुण्याहं च कृत्वा, अमुकगोत्राममुकनाम्नीं मम धर्मपत्नीं सीमन्तोन्नयनेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, अग्निप्रतिष्ठादिपात्रसादनान्ते त्रिषु प्रदेशेषु शुक्लवर्णां शलली पिशाचोदुम्बरस्तबकं त्रीन् दर्भपुञ्जलान् सूत्रग्रथितान् विरूढान् यवांश्च सादयित्वा, आज्यभागान्ते "धाता ददातु नो रयि"मिति चतसृभिः, "यस्त्वा हृदा कीरिणे"ति चतसृभिः, प्रधानाहुतीर्हुत्वा, जयाद्य-...नान्ते अग्नेः पश्चात् प्राङ्मुखीं पत्नीमुपवेश्य, शलल्यादीन् यवव्यति-
...न्युपस्थ... ...गृहीत्वा, तैः पत्न्याः शिरोमध्ये रेखां "भूर्भुवस्सुवो" राकामहँ
रिक्तान् सह ... ...णोतु नः सुभगा बोधतु त्मना। सीव्यत्वपस्सूच्याच्छिद्य-
मानया ददातु वीरँ ... सुहवाँ सुष्टुती हुवे शृ... ...तदायमुक्थ्यं। यास्ते राके सुमतयस्सुपेशसो

याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपा'हि सहस्रपोषँ सुभगे रराणा। इत्येताभ्यामुल्लिख्य, पश्चात् निरस्य, अप उपस्पृश्य, "गायत"-मिति वीणागाथिनौ संशास्ति। तौ च "सोम एव नो राजेत्याहु ाह्मणीः प्रजाः-विवृत्त चक्रा आसीनास्तीरेणासौ तव" इत गायेताम्। अत्रासा-वित्यस्य स्थाने यस्या नद्यास्तीरे वसन्ति तन्नाम सम्बुद्धया निर्दिशेत्। अथ सूत्रग्रथितान् यवान् पत्न्याश्शिरस्याबद्धयायवाना बन्धनं च अस्या वस्त्राञ्चले निबद्धयानक्षत्रोदयान्मौनी स्यात्। नक्षत्रेषूदितेषु प्राचीमुदीचा वा दिशं गत्वा, वत्समभिमृश्य, व्याहृतीर्जपित्वा, मौनं विसृजेत्॥

## ॥ जातकर्म ॥

जाते पुत्रे दिवा नक्तं वा पिता सचेलः स्नात्वा, अमुकगोत्र अमुकनक्षत्रे जातं कुमारं जात(कर्म) कर्मणा संस्करिष्यामीति सङ्कल्प्य, वात्म-प्रेणाभिमृशति। दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परिजातवेदाः। तृतीय-मप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः। विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा। विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ-समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन्। तृतीये त्वा रजसि तस्थिवाँसमृतस्य योनौ महिषा अहिन्वन्। अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन्। सद्यो जज्ञानो विहीमिद्धो अख्यदारोदसी भानुना भात्यन्तः। उशिक्पावको अरतिस्सुमेधा मर्तेष्वग्निरमृतो निधायि। इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामि-नक्षत्। विश्वस्य केतुर्भुवनस्य गर्भ आरोदसी अपृणाज्जायमानः। वीडुञ्चिदद्रि-मभिनत्परायं जनायदग्निमयजन्त पञ्च। श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणस्सोम गोपाः। वसोस्सूनुस्सहसो अप्सु राजा विभात्यग्र उषसामिधानः।

यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने। प्रतन्नय प्रतरां वस्यो अच्छाभिद्युम्नं देवभक्तं यविष्ठ। आ तं भज सौश्रवसेष्वग्न उक्थ उक्थ आभज शस्यमाने। प्रियस्सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनदद्जनित्वैः। त्वामग्ने यजमाना अनु द्यून् विश्वा वसूनि दधिरे वार्याणि। तया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः। दृशानो रुक्म उर्व्या व्यद्यौदुद्मर्षमायुः श्रिये रुचानः। अग्निरमृतो अभवद्वयोभिः यदेन द्यौरजनयत्सुरेताः।

इति कुमारमभिमृश्य, "अश्मन्नहँ सहस्रं पुष्याम्येधमान स्ववशे" इति कुमारमङ्के निधाय, अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। आत्म वै पुत्र नामासि स जीव शरदश्शत। अश्मा भव-परशुर्भव-हिरण्यमस्नृतं भव। पशूनां त्वा हिङ्कारेणाभिजिघ्रामि। न क्षत्र इति द्वाभ्यां तमभिमन्त्र्य, ताभ्यामेव तस्य मूर्धन्यवघ्राय, ते एव तस्य दक्षिणकर्णे जपेत्। अत्रासौ शब्दे अभिमन्त्रणावघ्राणजपेषु कुमारो यस्मिन्नक्षत्रे जातः तन्नक्षत्रनामरहस्यं निर्दिशेत्-आश्वयुज-आपभरण-कृत्तिक-रौहिण-मार्गशीर्ष-आर्द्रक-पुनर्वसो पुष्य-आश्रेष-माघ-पूर्वफाल्गुन-उत्तरफाल्गुन-हस्त-चैत्र-स्वाते-विशाख अनूराध-ज्येष्ठ-मूलक-पूर्वाषाढ-उत्तराषाढ-श्रवण-धनिष्ठ-शतभिषक्-पूर्वप्रोष्ठपाद-उत्तरप्रोष्ठपाद-रैवत इति मधु घृतं च संसृज्य, तस्मिन् दर्भेण शिखाबन्धवत् सरन्ध्रेण ग्रन्थिना हिरण्यमवधाय, तेन तदादाय, "मेधां ते देवस्सविता मेधां देवी सरस्वती। मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजा। त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु, त्वयि मेधां त्वयि प्रजां त्वयीन्द्र इन्द्रियं दधातु, त्वयि मेधां त्वयि प्रजां त्वयि सूर्यो भ्राजो दधातु" इत्येतैः कुमारं प्राशयित्वा, "क्षेत्रियै त्वेति पञ्चभि. स्नापयित्वा," क्षेत्रियै त्वा निर्ऋत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात्। अनागसं ब्रह्मणे त्वा करोमि शिवे ते

द्यावापृथिवी इमे। शन्ते अग्निस्सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः। शमन्तरिक्षँ सह वातेन ते शंते चतस्रः प्रदिशो भवन्तु। या दैवीश्चतस्रः प्रदिशो वातपत्नीरभिसूर्यो विचष्टे। तासां त्वा जरस आदधामि प्रयक्ष्म एतु निर्ऋतिं पराचैः-अमोचि यक्ष्माद्दुरितादवर्त्यै द्रुहः पाशान् निर्ऋत्यै चोदमोचि। अहा अवर्तिमविदथ्स्योनमप्यभूद्भद्रे सुकृतस्य लोके। सूर्यमृतं तमसो ग्राह्या यद्देवा अमुञ्चन्नसृजन् व्येनसः। एवमहमिमं क्षेत्रियाज्जामि शँसाद्द्रुहो मुञ्चामि वरुणस्य पाशात्। इति स्नापयित्वा दधि घृतं कांस्यपात्रे संसृज्य भूः स्वाहा, भुवः स्वाहा, सुवः स्वाहा, ओँ स्वाहा इति प्राशयित्वा, शेषमद्भिस्संसृज्य, अन्येन गोष्ठे निनीय, अङ्कस्थ, कुमारं "माते कुमारँ रक्षोवधीन्मा धेनुरत्यासारिणी। प्रिया धनस्य भूया-एधमाना स्वे गृहे-इति कुमारं मातुरङ्के निधाय, "अयं कुमारो जरां धयतु दीर्घमायुः-यस्मै त्वँस्तन प्रप्यायायुर्वर्चो यशो बलं। इति तस्या दक्षिणं-स्तनं पाययित्वा, "यद्भूमेर्हृदयं दिवि चन्द्रमसि श्रितं। तदुर्विपश्यं माहं पौत्रमघँ रुदं। यत्ते सुसीमे हृदयं वेदाहं तत्प्रजापतौ। वेदामतस्य ते वयं माहं पौत्रमघँ रुदं। इति पृथिवीमभिमृश्य, अभिमृष्टायां पृथिव्यां तूष्णीं कुमारं संवेशयेत्। संविष्टं कुमारं-नामयति न रुदति यत्र वयं वदामसि यत्रचाभिमृशामसि। इत्यभिमृश्य आपस्सुप्तेषु जाग्रत रक्षाँसि निरितो नुदध्वं इति कुमारस्य शिरःप्रदेशे उदकुम्भं निधाय॥

## ॥ फलीकरणहोमः ॥

अग्निं प्रतिष्ठाप्य, परिस्तीर्य, दर्वीवदञ्जलिं संस्कृत्य, परिषिच्य, फलीकरणमिश्रान् गौरसर्षपान् "अयं कलिं" इत्यादिभिः मन्त्रैः प्रतिमन्त्रं स्वाहाकारमञ्जलिना चतुर्विंशतिवारं हुत्वा-तत्प्रकारः-"अयं कलिं पतयन्तं श्वानमिवोद्वृद्धं-अजां वाशितामिव मरुतः पर्याध्वँ स्वाहा स्वाहा स्वाहा-मरुद्भ्य

इदं। "शण्डेरयश्शण्डिकेर उलूखलः-च्यवनो नश्यतादितः स्वाहा स्वाहा-स्वाहा अग्नय इदं। अयश्शण्डो मर्क उपवीर उलूखल—च्यवनो नश्यतादितः स्वाहा स्वाहा स्वाहा—अग्नय इदं। "केशिनी श्वलोमिनीः खजापोजोपका-शिनीः—अपेत नश्यतादितः स्वाहा स्वाहा स्वाहा अग्नय इदं। "मिश्रवाससः कौबेरकारक्षोराजेन प्रेषिताः। ग्रामँ सजानयो गच्छन्तीच्छन्तोऽपरिदाकृतान्थ् स्वाहा स्वाहा स्वाहा अग्नय इदं। एतान् घ्नतैतान् गृह्णीतेत्ययं ब्रह्मणस्पुत्रः तानग्निः पर्यसरत्तानिन्द्रस्तान् बृहस्पतिः। तानह वेद ब्राह्मणः प्रमृशतः कूटदन्तान् विकेशान् लम्बनस्तनान्थ् स्वाहा स्वहा स्वाहा अग्नीन्द्राबृहस्पतिभ्य इदं। "नक्तंचारिण उपस्पेशाञ्छूलहस्तान् कपालपान् पूर्व एषां पितेत्युच्चैः श्रा०यकर्णकः-माता जघन्या सर्पति ग्रामे विधुरमिच्छन्ती स्वाहा स्वाहा स्वाहा—अग्नय इदं। निशीथचारिणी स्वसा सन्धिना प्रेक्षते कुलं। या स्वपन्तं बोधयति यस्यै विजातायां मनः-तासां त्वं कृष्ण-वर्त्मने क्लोमानँ हृदयं यकृत्। अग्ने अक्षीणि निर्दहथ्स्वाहा स्वाहा स्वाहा अग्नय इदं। परिषिच्य, अग्निमुपस्थाय, तमग्निं दशरात्रं सुरक्षितं कृत्वा, सूतिकागृहस्य प्रवेशे प्रवेशे तस्मिन्नग्नौ फलीकरणमिश्रान् सर्षपानञ्जलिना प्रक्षिपतेति सूक्तिकागृहपालकान् जनान् संप्रेषयेत्। कालातिक्रमे नेदं सम्प्रेषणं नाग्निसंरक्षणं च जातकर्माङ्गं अभ्युदयं पुण्याहं च कुर्यात्॥

## ॥ अथ नामकरणम् ॥

पिता मता च अमुकगोत्रस्यामुकनक्षत्रे जातस्य कुमारस्य नाम धास्या-वह इति सङ्कल्प्य, कुमारस्य दक्षिणे कर्णे शर्मान्तं नाम ब्रूयातां विष्णु-शर्मेति। ततोऽभ्युदयं पुण्याहं च कुर्यात्। अस्मिन् पुण्याहे मध्यमे स्वस्ति-

वाचने अमुकशर्मणे स्वस्ति भवन्तो ब्रुवन्तु अमुकशर्मणे स्वस्तीति प्रार्थना-प्रतिवचने कुर्युः ॥

## ॥ अन्नप्राशनम् ॥

## ॥ शुद्धिपुण्याहम् ॥

तण्डुलोपरि प्रागग्रान् दर्भान् संस्तीर्य, तेषु कुम्भं निधाय, व्याहृतिभिरपः पूरयित्वा, ऊर्ध्वाग्रं कूर्चं निधाय, चूतपल्लवनारिकेलगन्धाक्षतपुष्पादिभिरलङ्कृत्य, प्राणानायम्य श्रीगोविन्देत्यादि अस्यां शुभतिथौ भगवत्प्रीत्यर्थं भगवत्कैङ्कर्यरूपं पालिकाशुद्ध्यर्थं शुद्धिपुण्याहवाचनं करिष्य इति सङ्कल्प्य, चतुरो ब्राह्मणान् भोजयिष्य इति ब्राह्मणान् भोजयित्वा, भोजनपर्याप्तमामं हिरण्यं वा दत्वा, तैर्ब्राह्मणैस्सह पूर्वोक्तप्रकारेण स्वामिनः मनस्समाधीयतामित्यारभ्य, कर्मणः पुण्याह कर्मणे स्वस्ति कर्मण ऋद्धिमिति च विहाय, कुम्भे शान्तिरशान्तिरशान्तिरिति- जलनिनयनपर्यन्तं कृत्वा, वरुणं सम्पूज्य, " दधि क्राव्ण्ण" इत्यृचं " आपो हिष्ठा मयो भुवः" इति तिस्रः, "हिरण्यवर्णा" इति चतस्रः, "पवमानस्सुवर्जन" इत्यनुवाकं, "तच्छंयोरिति च जपित्वा, वरुणमुद्वास्य, तेन जलेन पञ्चपालिकाः कूर्चेन व्याहृतिभिः प्रोक्ष्य, पालिकाव्रीहिषु निधाय ॥

अन्नप्राशनचौलोपनयनानां अन्नप्राशनचौलयोः चौलोपनयनयोर्वा सहकरणे सकृदेवाङ्कुरार्पणं प्रतिसरं अभ्युदयं च कुर्यात् । तत्तत्काले करणे तदा तदा कुर्यात् । पुण्याहं तु सर्वदा प्रत्येकं कुर्यात् ॥

## ॥ अङ्कुरार्पणम् ॥

प्राणानायम्य – श्रीगोविन्देत्यादि अस्यां शुभतिथौ अमुकस्यास्य

अमुकशर्मणः कुमारस्य अमुककर्माङ्गं अङ्कुरार्पणकर्म करिष्यामि–प्राणानायम्य पञ्चपालिकाशुद्ध्यर्थं पुण्याहं वाचयिष्ये–पुण्याहं वाचयित्वा, पुण्याहजलेन पञ्चपालिकाः कूर्चेन व्याहृतिभिः प्रोक्ष्य–पञ्चपालिकाः सौवर्णरजतताम्रमृण्मयीर्वा यथासम्भवं गृहीत्वा—

" मध्ये प्रजापतिं विद्यादिन्द्रं प्राच्यां तथैव च ।
दक्षिणे तु यमं विद्यात् पश्चाद्वरुणमेव च ॥
उत्तरे सोम एव स्यात् पालिकासु यथाक्रमम् ।
वल्मीकमृत्तिकां हृत्वा गोमयं च तथैव च ॥
एतानि प्रक्षिपेत्तासु पालिकासु यथाक्रमम् ।
दूर्वामश्वत्थपत्रं च शिरीषं विल्वपत्रकं ॥
तासां मूले तु बध्नीयात् श्वेतसूत्रेण वेष्टयेत् ।
आवहनासनं पाद्यमर्घ्यमाचमनं तथा ॥
स्नानं वस्त्रोपवीत च गन्धपुष्पाक्षता अपि ।
धूपदीपे च नैवेद्यं ताम्बूलं च पृथक् पृथक् ॥

पञ्चपालिकासु प्रागग्रं कूर्चं निधाय, व्याहृतिभिः ब्रह्मादीनावाहयेत्—।

मध्यमपालिकायाम्—

ओं भूः ब्रह्माणमावाहयामि, ओं भुवः प्रजापतिमावाहयामि, ओं सुवः चतुर्मुखमावाहयामि, ओं भूर्भुवस्सुवः स्वाहा हिरण्यगर्भमावाहयामि, ब्रह्मादिभ्यो नम, ब्रह्मादीनामिदमासनम्,

पूर्वपालिकायाम्

ओं भू. इन्द्रमावाहयामि, ओं भुवः वज्रिणमावाहयामि, ओं सुवः शतक्रतुमावाहयामि, ओं भूर्भुवस्सुवः शचीपतिमावाहयामि, इन्द्रादिभ्यो नमः, इन्द्रादीनामिदमासनम् ।

## ॥ दक्षिणपालिकायाम् ॥

ओं भूः यममावाहयामि, ओं भुवः वैवस्वतमावाहयामि, ओं सुवः पितृपतिमावाहयामि, ओं भूर्भुवस्सुवः धर्मराजमावाहयामि, यमादिभ्यो नमः, यमादीनामिदमासनम् ॥

## ॥ पश्चिमपालिकायाम् ॥

ओं भूः वरुणमावाहयामि, ओं भुवः प्रचेतसमावाहयामि, ओं सुवः सुरूपिणमावाहयामि, ओं भूर्भुवस्सुवः अपां पतिमावाहयामि, वरुणादिभ्यो नमः, वरुणादीनामिदमासनम ॥

## ॥ उत्तरपालिकायाम् ॥

ओं भूः सोममावाहयामि, ओं भुवः इन्द्रमावाहयामि, ओं सुवः निशाकरमावाहयामि, ओं भूर्भुवस्सुवः ओषधीशमावाहयामि, सोमादिभ्यो नमः, सोमादीनामिदमासनम् । ब्रह्मादिभ्यो नमः, इद पाद्यमिदमाचमनीयं इदमर्घ्यमिदमाचमनीयं, इन्द्रादिभ्यो नमः, इदं पाद्यमिदमाचमनीयं, वरुणादिभ्यो नमः, इदं पाद्यं इदमाचमनीयं इदमर्घ्यमिदमाचमनीयं, वरुणादिभ्यो नमः–इदं पाद्यमिदमाचमनीयं इदमर्घ्यं इदमाचमनीयं, सोमादिभ्यो नमः–इदं पाद्यं इदमाचमनीयं इदमर्घ्यमिदमाचमनीयम, "दधिक्राव्ण इत्यृचं" आपो हिष्ठा मयो भुव" इति तिसृभिः, "हिरण्यवर्णाः शुचयः पावकाः" इति चतसृभिः, "पवमानस्सुवर्जन इत्यनेनानुवाकेन च स्नापयित्वा, ब्रह्मादिभ्यो नमः इदं स्नान, इन्द्रादिभ्यो नमः–इदं स्नान, यमादिभ्यो नमः, इदं स्नानं, वरुणादिभ्यो नमः, इदं स्नानं, सोमादिभ्यो नमः इदं स्नानन् । ब्रह्मादिभ्यो नमः

इदमाचमनीयं इदं वस्त्रं इदमाचमनीयं इदमुपवीतं इदमाचमनीयम् । इन्द्रादिभ्यो नमः - इदमाचमनीयमिदं वस्त्रं इदमाचमनीयं इदमुपवीतं इदमाचमनीयम् । यमादिभ्यो नमः—इदमाचमनीयं इदं वस्त्रं इदं आचमनीयमिदमुपवीतमिदमाचमनीयम् । वरुणादिभ्यो नमः-इदमाचमनीयमिदं वस्त्रं इदमाचमनीयमिदमुपवीतमिदमाचमनीयम् । सोमादिभ्यो नमः—इदमाचमनीयमिदं वस्त्रं इदमाचमनीयमिदमुपवीतमिदमाचमनीयम् । ब्रह्मादिभ्यो नम—एते गन्धाक्षतपुष्पधूपदीपोत्तरीयाद्याभरणाद्यलङ्कारास्सर्वोपचाराः । इन्द्रादिभ्यो नमः—यमादिभ्यो नमः—वरुणादिभ्यो नमः—सोमादिभ्यो नमः—एते गन्धाक्षतपुष्पधूपदीपोत्तरीयाभरणाद्यलङ्काराः सर्वोपचाराः । ब्रह्मेन्द्रयमवरुणसोमादिभ्यो नमः यथाभागशः गुडोपहारं निवेदयामि ताम्बूलं समर्पयामि—सर्वोपचारान् समर्पयामि—ओषधीः सम्भृत्योत्थाय—

दिशां पतीन् नमस्यामि सर्वकामफलप्रदान् ।
कुर्वन्तु सफलं कर्म कुर्वन्तु सततं शुभम् ॥

उपविश्य व्रीहियवमाषतिलमुद्गसर्षपान् मिश्रीकृत्य—क्षीरेण प्रक्षाल्य ओषधिसूक्तेन "या जाता" इत्यनुवाकेनाभिमन्त्र्य ॥

—अङ्कुरजपमन्त्रः—

"या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामहँ शतं धामानि सप्त च । शतं वो अम्ब धामानि सहस्रमुतवो रुहः—अथा शतक्रत्वो यूयमिमं मे अगदं कृत । पुष्पावतीः प्रसूवतीः फलिनीरफला उत—अश्वा इव सजित्वरीः वीरुधः पारयिष्णवः—ओषधीरिति मातरस्तद्वो देवीरूप ब्रुवे—रपाँसि विघ्नतीरितरपः—चातयमानाः—अश्वत्थे वो निषदनं पर्णेवो वसतिः

कृता-गोभाज इत्किलासथ यत्सनवथ पूरूषम् । यदहं वाजयन्निमा ओषधीर्हस्त आदधे-आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा । यदोषधयस्सङ्गच्छन्ते राजानस्समिताविव । विप्रस्स उच्यते भिषग्रक्षोहामीव चातनः-निष्कृतिर्नाम वो माताथा यूयँ स्थ सङ्कृतीः । सरः पतत्रिणीः-स्थनयदामयति निष्कृत-अन्या वो अन्यामवत्वन्यान्यस्या उपावत । तास्सर्वा ओषधय-स्संविदाना इदं मे प्रावता वचः । उच्छुष्मा-ओषधीनां गावो गोष्ठादि-वेरते । धनँ सनिष्यन्तीनां आत्मानं तव पूरुष । अतिविश्वाः परिष्ठास्तेन इव व्रजमक्रमुः । ओषधयः प्राचुच्यवुर्यत्किञ्च तनुवाँ रपः । यास्त आतस्थुरात्मानं या आ विविशुः परुः परुः-तास्ते यक्ष्मं विबाधन्तां उग्रो मध्यमशीरिव । साकं यक्ष्म प्रपत श्येनेन किकिदीविना-साकं वातस्य ध्राज्या साकं नश्यनिहाकया अश्वावतीँ सोमवतीमूर्जयन्तीमुदोजसम् । आवित्सि सर्वा ओषधीरस्मा-अरिष्टतातये । याः फलीनीर्या अफला अपुष्पा याश्च पुष्पिणीः-बृहस्पति प्रसूता स्तानो मुञ्चन्त्वँहसः । याः ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु-तासां त्वमस्युत्तमा प्रणो जीवातवे सुव । अवपतन्तीरवदं दिव ओषधयः परि । यं जीवमश्नवामहै न स रिष्याति पूरुषः । याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । इह सङ्गत्य तास्सर्वा अस्मै सन्दत्त भेषजम् । मावो रिषत्खनिता यस्मै चाहं खनामि वः । द्विपच्चतुष्पदस्माकँ सर्वमस्त्वनातुरम् । ओषधयस्संवदन्ते सोमेन सह राज्ञा । यस्मै करोति ब्राह्मणस्तँ राजन् पारया-मसि । ब्राह्मणाननुज्ञाप्य, बीजावापनमुहूर्तस्सुमुहूर्तोऽस्त्विति भवन्तो महान्तोऽनु-गृह्णन्तु ॥

## ॥ बीजावापनमन्त्रः ॥

"ब्रह्मजज्ञानं प्रथमं पुरस्तात् विसीमतस्सुरुचो वेन आवः-स बुध्निया उपमा-अस्य विष्ठास्सतश्च योनिमसतश्च विवः । पिता विराजामृषभो रयीणां-

अन्तरिक्षं विश्वरूप आविवेश। तमर्कैरभ्यर्चन्ति वत्सम्। ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः। ब्रह्मादिभ्यो नमः, अयं बीजावापः–सकृन्मन्त्रेण द्विस्तूष्णीम् ॥

"यत इन्द्र भयामहे ततो नो अभयं कृधि–मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि। स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी–वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः"। इन्द्रादिभ्यो नमः, अयं बीजा-वापः, सकृन्मत्रेण द्विस्तूष्णीम् ॥

"योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी–यमं भङ्गयश्रवो गाययो राजानपरोध्यः–यमं गाय भङ्गयश्रवो यो राजा न परोध्यः। ये नापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा"। यमादिभ्यो नमः अय बीजावापः, सकृन्मन्त्रेण द्वितूष्णीम् ॥

"इमं मे वरुण श्रुधीहवमद्या च मृडय। त्वा मवस्युराचके। तत्वा-यामि ब्रह्मणा वन्दमानः तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोद्धयुरुशँस मा न आयुः प्रमोषीः"। वरुणादिभ्यो नमः–अयं बीजावापः, सकृन्मन्त्रेण द्विस्तूष्णीं ॥

"सोमो धेनुँ सोमो अर्वन्तमाशुं। सोमो वीरं कर्मण्यं ददातु। सादन्यं विदथ्यँ सभेयं। पितु श्रवणं यो ददाश दस्मै ॥ आप्यायस्व समैतु ते विश्वतः सोम वृष्णियम्। भवावाजस्य–सङ्गथे। सोमादिभ्यो नमः, अयं बीजावापः–सकृन्मन्त्रेण द्विस्तूष्णीम् ।

शुद्धाभिः सिकताभिः प्रच्छाद्य–सुमङ्गलीभिः जलं प्रक्षिप्य, प्रणवेन पिधाय, ओमिति सर्वेषामपिधानं–यावत्कर्मान्तं तावत् गोपयेत ॥

## ॥ प्रतिसरः ॥

प्राणानायम्य–अमुकगोत्रस्यामुकशर्मणः अमुककर्माङ्गं प्रतिसरबन्धकर्म करिष्यामि इति सङ्कल्प्य, शुचौ देशे गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं उपलिप्य–युग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादान् आचान्तान् प्रतिदिश-मासनेषूपवेश्य, पश्चात् प्राङ्मुख आचार्य उपविशति । पूर्ववत् प्रतिसरबन्धा-भ्युदयपुण्याहवाचनानि कृत्वा, अमुकगोत्रममुकशर्माणं कुमारमन्नप्राशनेन कर्मणा संस्करिष्यामि इति संकल्प्य, दधि मधु घृतं ओदनञ्च पात्रे संसृज्य, "भूर-पान्त्वौषधीनाँ रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वमुकशर्मन् । "भुवोऽपां त्वौषधीनाँ रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वमुकशर्मन् । "सुवरपाँ त्वौषधीनाँ रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वमुकशर्मन् । भूर्भुव-स्सुवरपां त्वौषधीनाँ रसं प्राशयामि शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वमुकशर्मन्, इति प्राशयित्वा, सर्वत्रादश्शब्देषु तत्तद्वि-भक्तिकं तत्तच्छर्म ब्रूयात् ।

## ॥ अथ चौलम् ॥

स्नातं शुद्धकौपीनवस्त्रधरं धृतोर्ध्वपुण्ड्रं सुप्रक्षालितपाणिपादं स्वाचान्तं कुमारं दक्षिणत उपवेश्य, अङ्कुरार्पणप्रतिसराभ्युदयपुण्याहवाचनानि कृत्वा, अमुकगोत्रममुकशर्माणं कुमारं चौलकर्मणा संस्करिष्यामीति सङ्कल्प्य, क्षारल-वणवर्जं कुमारं भोजयित्वा, अग्निप्रतिष्ठादिपात्रप्रयोगान्ते शीतोष्णजले यवान् द्वादशदर्भान् आनडुहं शकृत्पिण्डं क्षुरं शलल्यादींश्च सादयित्वा आज्य-भागान्ते कुमारेणान्वारब्धः, "धाता ददातु नो रयिं" "यस्त्वा हृदा" इति

चाष्टाहुतीः हुत्वा, जयाद्यन्युपस्थानान्ते अग्नेः पश्चात् प्राङ्मुखं कुमारं उपवेश्य, शलल्यादिना तस्य शिखार्थान् वप्तव्यांश्च केशान् पृथग्विभज्य, शलल्यादीन् पश्चान्निरस्याप उपस्पृश्य, "उष्णेन वायवुदकेनेह्यदितिः केशान् वपतु इति उष्णजलं शीतजले निनीय, "आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे," "ज्योक्च सूर्यं दृशे," इति कुमारस्य वप्तव्यान् केशान् तेन जलेन प्रागादि· प्रदक्षिणं सेचयित्वा, त्रीन् दर्भान् पुरस्तात् केशेष्वन्तर्धाय, येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्–तेन ब्रह्माणो वपतेदमस्यायुष्मान् जरदष्टिर्यथा सदयं–कृष्णशर्मा–इति सकेशान् दर्भान् छिनत्ति, वपन्तमाचार्यं कश्चित् ब्रह्मचारी कुमारस्य माता वा दक्षिणत उपविश्य, "यत्क्षुरेण मर्चयता सुपेशसा वस्त्रावपसि केशान्–शुन्धिशिरो मास्यायुः प्रमोषीः । इत्यनुमन्त्रयते । अथाचार्यः सदर्भान् केशान् तद्धस्ते प्रदाय, दक्षिणतो दर्भान्केशेष्वन्तर्धाय, "येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषे वपत्–तेनास्यायुषे वप सौश्लोक्याय स्वस्तये । इति दक्षिणतः केशान् छित्वा, तद्धस्ते प्रदाय, पश्चात् केशेषु तद्दर्भानन्तर्धाय, "येन भूयश्चरात्ययं ज्योक्च पश्याति सूर्यम्–तेनास्यायुषे वप सौश्लोक्याय स्वस्तये । इति छित्वा, तद्धस्ते प्रदाय, उत्तरतः केशेषु दर्भानन्तर्धाय, "येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषे वपत् । तेन ते वपामि शर्मन् आयुषा वर्चसा यथा ज्योक्सुमना असाः । इति छित्वा प्रदाय, अप उपस्पृशेत् । ब्रह्मचारी माता वा तान्सर्वान् आनुडुहे शकृत्पिण्डे यवान्विते निधाय, "उप्त्वाय, केशान् वरुणस्य राज्ञो बृहस्पतिस्सविता सोमो अग्निः तेभ्यो निधानं बहुधान्वविन्दन् अन्तरा द्यावापृथिवी अपः सुवः" इत्युदुम्बरमूले दर्भस्तम्बे वा छादयेत् । ततः क्षुरं प्रक्षाल्य निदद्ध्यात्, तेन त्रिदिनं कर्म न कार्यम् अथ नापितेनोप्तकेशं कुमारं संस्नाप्य, दक्षिणत आसीनाय ब्राह्मणाय गां दद्यात् । पितुरन्यश्चौलकर्ता चेत्, तस्मै दद्यात् ॥

## ॥ अथोपनयनम् ॥

पञ्चमषष्ठसप्तमवर्षेषु वसन्ते कुर्यात्। सुप्रक्षालितपाणिपादं स्वाचान्तं धृतोर्ध्वपुण्ड्रं दक्षिणत उपवेश्य, गोत्रस्य शर्मणः कुमारस्य उपनयनकर्माङ्गं -अङ्कुरप्रतिसराभ्युदयपुण्याहवाचनानि कृत्वा, अमुकगोत्रं अमुकशर्माणं उपनेष्य इति सङ्कल्प्य, "यज्ञोपवीतं परमं पवित्र"मिति मन्त्रं सर्षिच्छन्दोदेवतं उच्चरन्नुपवीतं धारयित्वा, तन्मन्त्रं वाचयित्वाचमय्य-परिषेचनापोशनप्राणाहुतिसहितं क्षारलवणवर्जं कुमारं भोजयित्वा, चौलवत् दिग्वपनं कृत्वा, स्नातं कुमारं दक्षिणत उपवेश्य, अग्निप्रतिष्ठादिपात्रसादनान्ते अश्मानं सद्यः कृत्तं वासो मौञ्जीमजिनं दर्भानुदकुम्भं कूर्चं दण्डञ्च सकृत् सादयित्वा, आयामतः परिमाणमित्यादि आज्यभागान्ते कुमारस्य दक्षिणहस्ते पालाशीं समिधं प्रदाय, "आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने-घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमम् इति मन्त्रमाचार्य उक्त्वा आधेहीत्युक्त्वा, कुमारेण समिधमाधाप्य, आचार्यः-"आतिष्ठेममश्मानं अश्मेव त्वँ स्थिरो भव-अभितिष्ठ पृतन्यतस्सहस्व पृतनायतः"। इति मन्त्रमुच्चरन्, अग्नेरुत्तरतोऽश्मानँ दक्षिणेन पदा तिष्ठेति ब्रूयात्। कुमारो दक्षिणेन पदाऽश्मानं आस्थाय, तत्रैव अधस्तात् तिष्ठेत्। अथाचार्यः "रेवतीस्त्वा व्यक्ष्णन् कृत्तिकाश्चाकृन्तँस्त्वा-धियो वयं न वग्ना आवृञ्जन् सहस्रमन्ताँ अभितो अयच्छन्। देवीर्देवाय परिवी सवित्रे। महत्तदासामभवन्महित्वनं-इति वस्त्रमभिमन्त्र्य," या अकृन्तन्नवयन् या अतन्वत याश्च देवीरन्तानभितो ददन्त तास्त्वा देवीर्जरसे संव्ययं त्वा युष्मानिदं परिधत्स्व वासः परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः बृहस्पतिः प्रायच्छत् वास एतत्सोमाय राज्ञे परिधात वा उ-जरां गच्छासि परिधत्स्व वासो भवाकृष्टीनामभिशस्ति पावा शतं च जीव शरद-

स्सुवर्चा रायश्च पोषमुपसंव्ययस्व" इति तिसृभिः अभिमन्त्रितं वस्त्रं परिधाप्य, "परीदं वासो अधिधास्स्वस्तयेऽभूरापीनाममिशस्ति पावा। शतं च जीव शरदः पुरूचीः वसूनि चार्यो विभजासि जीवन्, इत्येतया कुमारममिमन्त्रयेत् ॥

"इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात्। प्राणा-पानाभ्यां बलमाभरन्ती प्रिया देवानाँ सुभगा मेखलेयम्। ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षस्सहमाना अरातीः-सा नस्समन्तमनु परीहि भद्रया भर्तारस्ते मेखले मारिषाम ॥

इति द्वाभ्यां त्रिरावृतां मौञ्जी कटिदेशे त्रिः प्रदक्षिणं परिधाय, नाभि-देशे ब्रह्मग्रन्थिं कृत्वा, तं मन्त्रं वाचयेत्, "मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरँ समिद्धम्। अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम्"। इति मन्त्रेण अजिनमुत्तरलोम धारयित्वा-तं मन्त्रं वाचयेत् अग्नेरुत्तरतो दर्भान् संस्तीर्य, तेषु "आ गन्त्रा समगन्महि प्रसु मृत्युं युयोतन अरिष्टास्सञ्चरेमहि स्वस्ति चरतादिह स्वस्त्या गृहेभ्यः"। इति मन्त्रेण कुमारं प्रत्यङ्मुखमवस्थाप्य, प्राङ्मुखस्तिष्ठन्नाचार्यः अन्यावर्जितं स्वोदकाञ्जलि कुमारस्याञ्जलौ तूष्णीं निनीय, तेनोदकेन "समुद्रादूर्मिर्मधुमाँ उदारदुपाँशुना सममृतत्वमश्याम्। इमे नु ते रश्मयस्सूर्यस्य येभिस्सपित्वं पितरो न आयन्"॥ इति मन्त्रेण कुमारं त्रिः प्रोक्ष्य, सकृन्मन्त्रेण द्विस्तूष्णीं श्लोकः

अन्ते तु सर्वमन्त्राणां हस्तग्रहणमिष्यते।
देवताभ्यः परीदानं रक्षणाय पृथक् पृथक् ॥

"अग्निष्टे हस्तमग्रभीत्सोमस्ते हस्तमग्रभीत्सविता ते हस्तमग्रभीत् सरस्वती ते हस्तमग्रभीत्पूषा ते हस्तमग्रभीदर्यमा ते हस्तमग्रभीत अँशस्ते हस्तमग्रभीद्भगस्ते

हस्तमग्रभीन्मित्रस्ते हस्तमग्रभीन्मित्रस्त्वमसि धर्मणाऽग्निराचार्यस्तव" ॥ इति दशभिः कुमारस्य साङ्गुष्ठं उत्तानं दक्षिणं हस्तं गृहीत्वा-"अग्नये त्वा परि ददामि शर्मन्-सोमाय त्वा परि ददामि-शर्मन्-सवित्रे त्वा परि ददामि-शर्मन्-सरस्वत्यै त्वा परि ददामि शर्मन्-मृत्यवे त्वा परि ददामि-शर्मन्-यमाय त्वा परि ददामि शर्मन्-गदाय त्वा परि ददामि-शर्मन्-अन्तकाय त्वा परि ददामि-शर्मन्-अद्भ्यस्त्वा परि ददामि-शर्मन्-ओषधीभ्यस्त्वा परि ददामि-शर्मन्-पृथिव्यै त्वा सवैश्वानरायै परि ददामि शर्मन्-इत्येकादशभिः प्रतिमन्त्रं अग्न्यादिदेवताभ्यो रक्षणार्थं किञ्चिद्धस्त प्रसार्य दत्वा, देवस्य त्वा सवितुः प्रसवे" उपनये-शर्मा इति हस्ताभ्यामालिङ्ग्य, आत्मनस्समीपं नीत्वा, यथास्थानमुपवेश्य, "सुप्रजाः प्रजया भूयास्सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैः"। इति तस्य दक्षिणे कर्णे जपित्वा, "ब्रह्मचर्यमागामुप मा नयस्व देवेन सवित्रा प्रसूत." । इति कुमारं वाचयित्वा, "को नामासीति" पृच्छेत् रामशर्मा "नामास्मीति" प्रतिब्रूयात् । "कस्य ब्रह्मचार्यसि" शर्मन्-इति पृष्टे-"प्राणस्य ब्रह्मचार्यस्मी"ति प्रत्युक्ते-शर्मैष ते देव सूर्य ब्रह्मचारी तं गोपाय समामृतैष ते सूर्यपुत्रस्स दीर्घायुस्समामृत-याँ स्वस्तिमग्निर्वायुः सूर्यश्चन्द्रमा आपोऽनु सञ्चरन्ति ताँ स्वस्तिमनुसंचर "शर्मन् इत्याचार्य उक्त्वा, "अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमशीय। इति कुमारं वाचयेत् ॥

## ॥ अथ होमः ॥

अत्र श्लोकः—योगादीन्वाचयन्नेव कुमारं हावयेत्खलु ।
द्वितीयचतुर्थौ ब्रूयात आचार्यो जुहुयाद्बटुः ॥

"योगे योगे तवस्तरं वाजे वाजे हवामहे। सखाय इन्द्रमूतये स्वाहा-इन्द्रायेदं । इममग्न आयुषे वर्चसे कृधि प्रियँ रेतो वरुण सोमराजन्-मातेवास्मा

अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथा सत् स्वाहा—अग्नीवरुणसोमादितिविश्वेभ्यो देवेभ्य इदं ॥ "शतमिन्नु शरदो अन्ति देवा यत्रानश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मानो मध्या रीरिषतायुर्गन्तोः स्वाहा—देवेभ्य इदं। अग्निष्ट आयुः प्रतरां दधात्वग्निष्टे पुष्टिं प्रतरां कृणोतु। इन्द्रो मरुद्भिर्ऋतुधा कृणोत्वादित्यैस्ते वसुभिरादधातु स्वाहा—अग्नीन्द्राभ्यामिदं। मेधां मह्यमङ्गिरसो मेधाँ सप्तर्षयो ददुः—मेधां मह्यं प्रजापतिः मेधामग्निर्ददातु मे स्वाहा—अङ्गिरससप्तर्षिप्रजापत्यग्निभ्य इदं। अप्सरासु च या मेधा गन्धर्वेषु च यद्यशः दैवी या मानुषी मेधा सा मा मा विशतादिह स्वाहा मेधायशोभ्यामिदं। इदं मे वरुण श्रुधीहवमद्या च मृडय—त्वामवस्युराचके स्वाहा—वरुणायेदं। तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः—अहेडमानो वरुणेह बोध्युरुशंस मान आयुः प्रमोषीः स्वाहा-वरुणायेदं। त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोवया सिसीष्ठाः—यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत्स्वाहा—अग्नीवरुणाभ्यामिदं। सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणँ रराणो वीहि मृडीकँ सुहवो न एधि स्वाहा—अग्नीवरुणाभ्यामिदं। त्वमग्ने अयास्ययासन्मनसा हितः—अयासन्हव्यमूहिषेऽयानो धेहि भेषजँ स्वाहा—अग्नय अयस इदं। आचार्यः—जयादि "यदस्य कर्मण" इति स्विष्टकृदन्तं हुत्वा, शम्या अपोह्य, संस्रावं हुत्वा, प्राणानायम्य, यजुर्भेषप्रायश्चित्तं करिष्य इति सङ्कल्प्य, भुवः स्वाहा—वायव इदं—इति हुत्वा, प्राणानायम्य, अस्मिन्नुपनयनहोमकर्मणि मध्ये सम्भावितमन्त्रतन्त्रस्वरवर्णविधिविपर्यासन्यूनातिरिक्तप्रायश्चित्तार्थं सर्वप्रायश्चित्तहोमं होष्यामीति सङ्कल्प्य, प्रायश्चित्ताहुतीर्हुत्वा, परिषिच्य, प्रणीताप्रोक्षणान्तं कृत्वा ॥

## ॥ ब्रह्मोपदेशः ॥

नमस्सदस इति सदस्यान् प्रणम्य, दक्षिणां दत्वा, अशेषे हे परिषत् स्वीकृत्य, मम गायत्रीप्रदाने अस्योपनीतस्य गायत्रीस्वीकरणे च योग्यतासिद्धिमनुगृहाणेति प्रार्थ्य, योग्यतासिद्धिरस्त्विति तैरनुज्ञातः, प्राणानायम्य, पूर्वोक्त्यादि मम गायत्रीप्रदाने अस्योपनीतस्य गायत्रीस्वीकरणे च योग्यतासिद्ध्यर्थं प्राजापत्यकृच्छ्राणि करिष्य इति सङ्कल्प्य, हिरण्यगर्भ-प्रयच्छ मे-इमानि प्राजापत्यकृच्छ्राणि हिरण्यरूपाणि नानागोत्रेभ्यः श्रीवैष्णवेभ्यस्तेभ्यः सम्प्रददे न मम-इति भूमौ साक्षतं सहिरण्यं जलं निस्राव्य, तद्धिरण्यं ब्राह्मणेभ्यो दत्वा, अग्नेः पश्चादुपनीतेन अयं कूर्च इति दत्तं कूर्चं सुकूर्चं इति प्रतिगृह्य, तस्मिन् कूर्चे "राष्ट्रभृदस्याचार्यासन्दी मात्वद्योषम्" इति कुक्कुटासनेन प्राङ्मुख उपविशेत्। कुमार आचार्यं प्रणम्याभिवाद्य, तस्य पुरस्तात् प्रत्यङ्मुख आसीनो, दक्षिणेन पाणिना तस्य दक्षिणं पादं सव्येन सव्यमुपसङ्गृह्य, सावित्रीं भो अनुब्रूहि इति प्रार्थयेत्। अथाचार्यः पादादौ प्रणवादिव्याहृतित्रयं, अर्धर्चादौ प्रथमद्वितीये व्याहृती, अनवानादौ तृतीयां व्याहृतिं च संयोज्य, गायत्रीं तस्य दक्षिणे कर्णे जपित्वा, तथैव तं वाचयित्वा, "अवृधमसौ सौम्य प्राण स्वं मे गोपाये"ति दक्षिणेन हस्तेन उत्तरमोष्ठमुपस्पर्शयित्वा, आचामयेत्। नात्रादश्शब्दे शर्मनिर्देशः। ब्रह्मण आणीस्थ इति हस्ताभ्यां युगपत्कर्णावुपस्पर्शयित्वा, "सुश्रवस्सुश्रवसं मा कुरु यथा त्वं सुश्रवस्सुश्रवा अस्येवमहँ सुश्रवस्सुश्रवा भूयासं यथा त्वँ सुश्रवो देवानां निधिगोपोऽस्येवमह ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम्" इति पालाशं बैल्वं वा दण्डं धारयित्वा, "स्मृत च मेऽस्मृतं च मे तन्म उभयं व्रतं निन्दा च मेऽनिन्दा च मे तन्म उभयं व्रतँ श्रद्धा च मेऽश्रद्धा

च मे तन्म उभयं व्रतं विद्या च मेऽविद्या च मे तन्म उभयं व्रतँ श्रुतं च मेऽश्रुतं च मे तन्म उभयं व्रतँ सत्यं च मेऽनृतं च मे तन्म उभयं व्रत तपश्च मेऽतपश्च मे तन्म उभयं व्रतं व्रतं च मेऽव्रतं च मे तन्म उभयं व्रतं यद्ब्राह्मणानां ब्रह्मणि व्रतम। यदग्नेस्सेन्द्रस्य सप्रजापतिकस्य सदेवस्य सदेवराजस्य समनुष्यस्य समनुष्यराजस्य सपितृकस्य सपितृराजस्य सगन्धर्वाप्सरस्कस्य। अन्य आत्मन आत्मनि व्रतं तेनाहँ सर्वव्रतो भूयासम्"॥ इति वाचयेत्। ततः कुमारो वरं ते ददामि" इति गुरवे वरं दद्यात्। आचार्यस्तं प्रतिगृह्य, "उदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थां अमृताँ अनु। इति कुमारमुत्थाप्य, "तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। "पश्येम शरदश्शतं, जीवेम शरदश्शतं, नन्दाम शरदश्शत, मोदाम शरदश्शतं भवाम शरदश्शतं श्रृणवाम शरदश्शतं प्रब्रवाम शरदश्शतं अजीता स्याम शरदश्शतं ज्योक्च सूर्यं दृशे इति मन्त्रैरादित्योपस्थानं कारयित्वा ब्रह्मोद्वासनं कृत्वा यस्मिन्भूतं च भव्य च सर्वे लोकास्समाहिताः तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णामि शर्मन्–इति तस्य दक्षिणं हस्तं दक्षिणहस्तेन गृह्णीयात्। ततः अग्निमुपतिष्ठेत्। ततः कुमारः त्रिः प्राणानायम्य, श्रीभगवदाज्ञया भगवत्प्रीत्यर्थं भगवत्कैङ्कर्यरूप प्रातस्समिध आधास्यामीति सङ्कल्प्य, उल्लिख्यावोक्ष्य, अग्निं प्रतिष्ठाप्य, प्रज्वाल्य, "परि त्वाऽग्ने परिमृजाम्यायुषा च धनेन च। सुप्रजाः प्रजया भूयासँ सुवीरो वीरैस्सुवर्चा वर्चसा सुपोषः पोषैः सुगृहो गृहैस्सुपतिः पत्या सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः इति परिसमूह्य–अदितेऽनुमन्यस्व, अनुमतेऽनुमन्यस्व, सरस्वतेऽनुमन्यस्व देव सवितः प्रसुव इति परिषिच्य, "अग्नये समिधमाहार्षं बृहते जातवादसे यथा त्वमग्ने समिधा समिध्यस

एवं मामायुषा वर्चसा सन्या मेधया प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा-एधोस्येधिषीमहि स्वाहा-समिदसि समेधिषीमहि स्वाहा-तेजोऽसि तेजो मयि धेहि स्वाहा-अपो अद्यान्वचारिषँ रसेन समसृक्ष्महि-पयस्वाँ अग्न आगमं तं मा सँसृज वर्चसा स्वाहा सम्माग्ने वर्चसा सृज प्रजया च धनेन च स्वाहा-विद्युन्मे अस्य देवा इन्द्रो विद्यात्सहर्षिभिः स्वाहा-अग्नये बृहते नाकाय स्वाहा-द्यावापृथिवीभ्याँ स्वाहा-एषा ते अग्ने समित्तया वर्धस्व चाप्यायस्व च तयाहं वर्धमानो भूयासं आप्यायमानश्च स्वाहा-यो माग्ने भागिनँ सन्तं अथाभागं चिकीर्षति-अभागमग्ने तं कुरु मामग्ने भागिनं कुरु स्वाहा-समिधमाधायाग्ने सर्वव्रतो भूयासँ स्वाहा-इति द्वादश समिध आधाय, तूष्णीं परिसमूह्य, अदितेऽन्वमँस्थाः अनुमतेऽन्वमँस्थाः सरस्वते अन्वमँस्थाः देव सवितः प्रासावीः इति परिषिच्य, ओं श्रीविष्णवे स्वाहा-श्रीविष्णवे परमात्मन-इदं। उपस्थानं-"यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाह वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहँ हरस्वी भूयासं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु" इति अग्निमुपतिष्ठेत। एतमग्निं त्र्यहं धारयेत्। सायंप्रातः समिध आदधीत। त्र्यहादूर्ध्वं आसमावर्तनं लौकिकाग्नौ सायं प्रातः समिध आदद्ध्यात्। अथाचार्यः कुमारं षडर्थान् संशास्ति। आचार्यः कुमारं ब्रह्मचार्यसि-कुमारः बाढं, आचार्यः-अपोशान-कुमारः बाढं, आचार्यः कर्म कुरु कुमारः-बाढं, आचार्यः-मासुषुप्थाः-कुमारः बाढं, आचार्यः-भिक्षाचर्यं चर-कुमारः-बाढं, आचार्यः-आचार्याधीनो भव-कुमारः बाढं, आचार्यः तस्मै अरिक्तं पात्रं प्रयच्छन्, मातरमेवाग्रे भिक्षस्व भगिनीं वेति ब्रूयात्। स च

भवति भिक्षां देहीति मातरमेवाग्रे भिक्षेत। भगिनीं वा तत्समाहृत्योपनिधाय, भैक्षमिदमाहृतं इत्याचार्याय ब्रूयात्। तत्सुभैक्षमित्याचार्यः प्रतिगृह्णीयात्। कुमारः त्र्यहं क्षारलवणवर्जं भुञ्जीत। मन्त्रवद्धृतमेव वस्त्रं धारयेत्। चतुर्थेऽहनि तद्विसृज्य, अन्यद्वस्त्रमाचार्यः परिधापयेत्। कुमारः पूर्वधृतवस्त्रं गुरो वासस्ते ददामि इति आचार्याय दद्यात्। "यस्य ते प्रथमवास्यँ हराम-स्तं त्वा विश्वे अवन्तु देवाः। तं त्वा भ्रातरस्सुवृधो वर्धमानमनु जायन्तां बहवस्सुजातं इति तत् प्रतिगृह्णीयात्॥

## ॥ अथोपाकर्म ॥

श्रावण्यां पौर्णमास्यां प्रातः काले तस्यां पौर्णमास्यां अध्यायोत्सर्जना-करणप्रायश्चित्तार्थं अष्टोत्तरसहस्रं कामोऽकार्षीन्मन्युरकार्षीदिति मन्त्रजपं करिष्य इति सङ्कल्प्य, तं मन्त्रं जपेयुः। अथ ब्रह्मचारिणो वापयेयुः। अथापराह्णे श्रावण्यां पौर्णमास्यां अध्यायमुपाकरिष्य इति सङ्कल्प्य, कटिसूत्रकौपीनवस्त्रो-पवीतमौञ्ज्यजिनदण्डान् नवान् तत्तन्मन्त्रेण यथार्हं धृत्वा, पुरातनान् परित्यज्य स्नात्वाचम्य, निवीतं कृत्वा, प्रजापतिं सोममग्निं विश्वान् देवान् सांहितीः याज्ञिकीः वारुणीः ब्रह्माणं स्वयम्भुवं सदसस्पतिं च नव एतान् काण्डर्षीन् ऋषितीर्थेन तिलाक्षतोदकैः त्रिस्त्रिः तर्पयित्वाचम्य, शुष्कवस्त्रं धारयेयुः। अथाचार्योऽग्निप्रतिष्ठाद्यग्निमुखान्ते शिष्यैरन्वारब्धः प्रजापतये काण्डर्षये स्वाहेत्यादिभिः नवभिः हुत्वा, "इषे त्वे"त्यादीन् चतुरोऽनुवाकान् अध्याप्य, जयाद्यग्न्युपस्थानान्तं कुर्यात्। परेद्युः महानद्यां तत्सम्बन्धिनि वा जले स्नात्वा, मिथ्याधीतप्रायश्चितार्थं सावित्र्या समित्सहस्रमाधास्यामीति सङ्कल्प्य, अग्निं प्रतिष्ठाप्य, परिस्तीर्य, परिषिच्य, प्रणवव्याहृतिपूर्वया सावित्र्याज्याभ्यक्तं

समित्सहस्रमेकैकश आधाय, परिषिच्य, "अग्ने नये"त्यग्निमुपतिष्ठेत । अथवा सावित्रीं सहस्रकृत्वो जपिष्यामीति सङ्कल्प्य, प्रणवादीनां ऋष्यादिपूर्वं प्राणायामत्रयादि कृत्वा, सप्तव्याहृतिपूर्विकां गायत्रीं शिरसा सह दशवारं जपित्वा, आयात्वित्याद्यावाहनादिपूर्वकं सहस्रं जपित्वा, त्रिः प्राणानायम्य, गायत्रीमभिवाद्योत्तमे शिखरे देवीत्युद्वासयेत् ॥

॥ व्रतारम्भ ॥

काण्डानां सङ्कीर्णत्वेन काण्डोपाकरणकाण्डोत्सर्जनानामभावेऽपि यदा कदाचिदुत्तरायणे विवाहात् प्राक् व्रतानि उत्सर्जनान्तानि कुर्यात् । ब्रह्मचारी नमस्सदस इति सदस्यान् प्रणम्य, स्वामिनः भवत् स्वीकृत्य, मम ब्रह्मचर्यव्रतलोपप्रायश्चित्तं कर्तुं योग्यतासिद्धिमनुगृहाणेति प्रार्थ्य, तैरनुज्ञातः, प्राणानायम्य, श्रीगोविन्देत्यादि–भगवत्प्रीत्यर्थं गोत्रस्य शर्मणः मम उपनयनप्रभृति एतत्क्षणपर्यन्त ब्रह्मचर्यव्रतलोपप्रायश्चित्तार्थं प्राजापत्यकृच्छ्राणि हिरण्यरूपेण करिष्य इति सङ्कल्प्य, हिरण्यं गृहीत्वा–हिरण्यगर्भ प्रयच्छ–मे–इत्युक्त्वा, इमानि हिरण्यानि मम ब्रह्मचर्यव्रतलोपप्रायश्चित्तार्थं प्राजापत्यकृच्छ्ररूपाणि नानागोत्रेभ्यस्संप्रददे न मम इति साक्षतं जलं भूमौ निक्षिप्य, ब्राह्मणेभ्यो दत्वा, सदस्यान् प्रणम्य, मयानुष्ठितं मम ब्रह्मचर्यव्रतलोपप्रायश्चित्तं यथाशास्त्रमनुष्ठितमस्त्विति भवन्तो ब्रुवन्तु इति प्रार्थ्य, तथास्तु यथाशास्त्रानुष्ठितमस्त्विति तैरनुज्ञात, व्रताङ्ग उप्तकेशं स्नातं शिष्यं दक्षिणत उपवेश्य—

-प्राजापत्यव्रतम्-

आचार्यः नमस्सदस इति सदस्यान् प्रणम्य, यथाशक्ति दक्षिणां दत्वा, गोत्रं शर्माणमिमं माणवकं प्राजापत्यसौम्याग्नेयवैश्वदेवव्रततदुत्सर्जनैश्च

संस्कर्तुं योग्यतासिद्धिमनुगृहाणेति प्रार्थ्य, तथास्त्वित्यनुज्ञातः, उपविश्य, विष्वक्सेनं सम्पूज्य, प्राणानायम्य, श्रीगोविन्देत्यादि भगवत्प्रीत्यर्थं गोत्र शर्माणमिमं माणवकं प्राजापत्यव्रतेन कर्मणा संस्करिष्यामीति संङ्कल्प्य, कृतप्राणायामं शिष्यं प्राजापत्यव्रतं चरिष्यामीति वाचयित्वा, वस्त्रोपवीतादीनि उपाकर्मवत् धारयित्वा, पुरातनानि त्याजयित्वा, स्नातं शिष्यं निवीतं "प्रजापतिं काण्डर्षिं तर्पयामि सांहितीर्देवता उपनिषदस्तर्पयामि याज्ञिकीर्देवता उपनिषदस्तर्पयामि वारुणीर्देवता उपनिषदस्तर्पयामि ब्रह्माणँ स्वयम्भुवं तर्पयामि सदसस्पतिं तर्पयामि इति एकैकं त्रिस्त्रिः तिलाक्षतोदकैः ऋषितीर्थेन तर्पयित्वाचम्य, अग्निप्रतिष्ठाद्यग्निमुखान्ते शिष्येणान्वारब्धः, प्रजापतये काण्डर्षये स्वाहा प्रजापतये काण्डर्षय इदं "प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणां स्वाहा–प्रजापतय इदं। "रयीणां पतिं यजतं बृहन्तं–अस्मिन् भरे नृतमं वाजसातौ। प्रजापतिं प्रथमजामृतस्य–यजाम देवमधिनो ब्रवीतु स्वाहा–प्रजापतय इदं। प्रजापते त्वं निधिपाः पुराणः–देवानां पिता जनिता प्रजानाम्। पतिर्विश्वस्य जगतः परस्पाः। हविर्नो देव विहवे जुषस्व–स्वाहा प्रजापतय इदं। "तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च–प्रजापते विश्वसृज्जीवधन्य इदं नो देव प्रतिहर्य हव्यं स्वाहा–प्रजापतय इदं। प्रजापतिं प्रथमं यज्ञियानां–देवानामग्रे यजतं यजध्वं। स नो ददातु द्रविणँ सुवीर्यम्। रायस्पोषं विष्यतु नाभिमस्मे स्वाहा–प्रजापतय इदं। "यो राय ईशे शतदाय उक्थ्यः–यः पशूनाँ रक्षिता विष्ठितानाम्–प्रजापतिः प्रथमजा ऋतस्य–सहस्रधामाजुषतां हविर्नः स्वाहा–प्रजापतय इदं। सांहितीभ्यो देवताभ्य उपनिषद्भ्यः स्वाहा सांहितीभ्यो देवताभ्य उपनिषद्भ्य इदं। याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यः

स्वाहा–याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्य इदं। वारुणीभ्यो देवताभ्यं उपनिषद्भ्यः स्वाहा–वारुणीभ्यो देवताभ्य उपनिषद्भ्य इदं। ब्रह्मणे स्वयम्भुवे स्वाहा–ब्रह्मणे स्वयम्भुव इदं। "सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यं-सनिं मेधामयासिषँ स्वाहा–सदसस्पतय इदं। माणवक उत्थाय, देवता अभिसन्धाय, अग्ने व्रतपते, काण्डर्षिभ्यः–प्राजापत्यव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यतां। वायो व्रतपते काण्डर्षिभ्यः–प्राजापत्यव्रतं चरिष्यामि तच्छ-केयं तन्मे राध्यताम्। आदित्य व्रतपते, काण्डर्षिभ्यः–प्राजापत्यव्रतं चरिष्यामि–तच्छकेयं तन्मे राध्यताम्। व्रतानां व्रतपते काण्डर्षिभ्यः-प्राजा-पत्यव्रतं चरिष्यामि – तच्छकेयं तन्मे राध्यताम्। जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वा, दक्षिणतो निषादितं ब्राह्मण सम्पूज्य. प्राणानायम्य, गोत्रस्य शर्मणो माणवकस्य प्राजापत्यसौम्याग्नेयवैश्वदेवव्रततदुत्सर्जनकर्माङ्गं अभ्युदयश्राद्धं करिष्य इति सङ्कल्प्य, अन्नेन आमेन हिरण्येन वा कृत्वा, पुण्याह वाचयित्वा, प्राणानायम्य, गोत्रं शर्माणं इमं माणवक प्राजापत्यव्रतो-त्सर्जनेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, कृतप्रणायामं माणवकं प्राजा-पत्यव्रतोत्सर्जनं चरिष्यामीति वाचयित्वा, वस्त्रादिधारण स्नानं तर्पणञ्च पूर्ववत् कारयित्वा, अग्निप्रतिष्ठाद्यग्निमुखान्ते पूर्ववत् प्रधानाहुतीः हुत्वा, माणवक उत्थाय, अग्ने व्रतपते काण्डर्षिभ्यः–प्राजापत्यव्रतमचारिषं–तदशक तन्मे राधि। वायो व्रतपते काण्डर्षिभ्यः–प्राजापत्यव्रतमचारिषं–तदशकं तन्मे राधि। आदित्य व्रतपते काण्डर्षिभ्यः–प्राजापत्यव्रतमचारिषं–तदशक तन्मे राधि। व्रतानां व्रतपते काण्डर्षिभ्यः–प्राजापत्यव्रतमचारिषं–तदशकं तन्मे राधि। जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वा, ब्राह्मणं सम्पूज्य, अग्निमुपस्थाय, गोत्रस्य शर्मणः अस्य माणवकस्य प्राजापत्यव्रतोत्सर्जनकर्माङ्गं पुण्याहं कुर्यात्॥

## ॥ सौम्यव्रतम् ॥

अथापराह्णे ग्रामात् बहिः प्राणानायम्य, अमुकगोत्रममुकशर्माणं माणवकं सौम्यव्रतेन कर्मणा संस्करिष्यामीति सङ्कल्प्य कृतप्राणायामं शिष्यं सौम्यव्रतं चरिष्यामीति वाचयित्वा, उपवीतादि धारयित्वा, स्नानपूर्वकं सोमं काण्डर्षिं तर्पयामि, सांहितीर्देवता उपनिषदस्तर्पयामि याज्ञिकीः वारुणीः ब्रह्माणँ स्वयंभुवं सदसस्पतिं च तर्पयित्वा, अग्निप्रतिष्ठादि पात्रसादनान्ते चतस्र औदुम्बरीस्समिध उदकुम्भं नव वस्त्रं च सादयित्वा, अग्निमुखान्ते शिष्येणान्वारब्धः, सोमाय काण्डर्षये स्वाहा–सोमाय काण्डर्षय इदं। "सोमो धेनुँ सोमो अर्वन्तमाशुं। सोमो वीरं कर्मण्यं ददातु। सादन्यं विदथ्यँ सभेयं। पितुश्श्रवणं यो ददाशदस्मै स्वाहा-सोमायेदं। "अषाढयुत्सु पृतनासु पप्रिं–सुवर्षामाप्स्वां वृजनस्य गोपां–भरेषुजाँ सुक्षितिँ सुश्रवसं–जयन्तं त्वामनुमदेम सोम स्वाहा–सोमायेदं। "त्वँ सोम क्रतुभिस्सुक्रतुर्भूः त्वं दक्षैस्सुदक्षो विश्ववेदाः–त्वं वृषा वृषत्वेभिर्महित्वा–द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः स्वाहा–सोमायेदं। "या ते धामानि हविषा यजन्ति–ता ते विश्वा परिभूरस्तु यज्ञं–गयस्फानः प्रतरणस्सुवीरो वीरहा-प्रचरा सोम दुर्यान्धस्स्वाहा-सोमायेदं। "त्वमिमा ओषधीस्सोम विश्वाः–त्वमपो अजनयस्त्वङ्गाः–त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ स्वाहा–सोमायेदं"। या ते धामानि दिवि या पृथिव्यां–या। पर्वतेष्वोषधीष्वप्सु–तेभिर्नो विश्वैस्सुमना। अहेडन्–राजन्थ्सोम प्रतिहव्या गृभाय स्वाहा–सोमायेदं। सांहितीभ्यो याज्ञिकीभ्यो वारुणीभ्यो ब्रह्मणे स्वयम्भुवे सदसस्पतये च हुत्वा, ततश्शिष्योऽग्नेः पुरस्तात् धान्योपरि स्थापितं सोदकं सकूर्चं वस्त्रवेष्टितं कुम्भमुपस्पृश्य" नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो

मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मामामृषयो मन्त्रकृतो मन्त्रपतयः परादुः माहमृषी-न्मन्त्रकृतो मन्त्रपतीन् परादां वैश्वदेवीं वाचमुद्यासँ शिवामदस्तां जुष्टां देवेभ्यश्शर्म मे द्यौश्शर्म पृथिवी शर्म विश्वमिदं जगत्। शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती। भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहं इदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासँ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु-ओं शान्तिः शान्तिः शान्तिः इत्यनुवाकं जपित्वा, अग्नेः पश्चात्तिष्ठन् "पृथिवी समिदन्तरिक्षँ समित् द्यौस्समित् प्राजा-पत्या मे समिदसि" इति चतुर्भिः आमूलाग्रं आज्याभ्यक्ताश्चतस्र औदुम्बरीः समिधोऽनावादधाति। "पृथिवी समित्-तामग्निस्समिन्धे-साग्निँ समिन्धे तामहँ समिन्धे सा मा समिद्धा-आयुषा तेजसा-वर्चसा श्रिया-यशसा ब्रह्मवर्चसेन-अन्नाद्येन समिन्ताँ स्वाहा-पृथिव्या इदं। अन्तरिक्षँ समित्। तां वायुस्समिन्धे-सा वायुँ समिन्धे-तामहँ समिन्धे-सा मा समिद्धा आयुषा तेजसा-वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन-अन्नाद्येन समिन्ताँ स्वाहा-अन्तरिक्षायेदं। द्यौस्समित्। तामादित्यस्समिन्धे-सादित्यँ समिन्धे-तामहँ समिन्धे-सा मा समिद्धा-आयुषा तेजसा वर्चसा श्रिया-यशसा ब्रह्मवर्चसेन अन्नाद्येन समिन्ताँ स्वाहा-दिव इदं। "प्राजापत्या मे समिदसि सपत्नक्षयणी-भ्रातृव्यहा मेऽसि स्वाहा-प्रजापतय इदं। "अग्ने व्रतपते काण्डर्षिभ्यः-सौम्यव्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्। वायो व्रतपते काण्डर्षिभ्यः-सौम्यव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यताम्। आदित्यव्रतपते

काण्डर्षिभ्यः-सौम्यव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यताम्। व्रतानां व्रतपते काण्डर्षिभ्यः-सौम्यव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यताम्-इत्युपतिष्ठेत् ॥

अथाचार्यः "युञ्जते मन" इत्यादीनां देवा वै सत्रमासतेत्यादीनां चानुवाकानां प्रथमपदानि युञ्जते सवितेति पदद्वयं वा शिष्यं वाचयित्वा ॥

तत्प्रकारः—युञ्जते-वृष्णः ब्रह्मन्-ब्रह्मन् दश-अपश्यं-देवस्य-समुद्राय-इषे-धर्म-महीनां-अरकान्-या-प्राणाय-पूष्णे-उत्-या-अग्निः-भूः-भूः-याः—स्निक्-धुनिः-उग्रः-अहोरात्रे-खट्-विगाः-असृङ्मुखः - यत्-यत् - दीर्घमुखि इत्थात्-यत्-प्रसार्य-अत्रिणा-आब्रह्मण-उत-भूः- पृथिवी-शं-देवाः - सावित्रं परिश्रिते ब्रह्मन् -अग्निः-शिरः-देवस्य-विश्वाः-धर्म-प्रजापतिं-प्रजापतिः-सविता ॥

युञ्जते सवितेति वा पादद्वय वाचयित्वा, जयाद्यग्न्युपस्थानान्तं कुर्यात्। ततः शिष्य उदकुम्भमुपस्पृश्य-"शन्नो वातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः-अहानि शं भवन्तु नः शँ रात्रिः प्रतिधीयताम्। शमुषो नो व्युच्छतु शामादित्य उदेतुनः-शिवा नश्शन्तमा भव सुमृडीका सरस्वति मा ते व्योम सन्दृशि-इडायैवास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्थ्स्मह्यवास्तुस्सभूयाद्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्म प्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठस्सभूयाद्योऽस्मान् द्वेष्टि यश्च वयं द्विष्मः। आवात वाहि भेषजं विवात वाहि यद्रपः। त्वँ हि विश्वभेषजो देवानां दूत ईयसे-द्वाविनो वातौ वात आसि-धोराषरावतः॥ "दक्षं मे अन्य आवातु परान्यो वातु यद्रपः-यददो वातते गृहेऽमृतस्य निधिर्हितः ततो नो देहि जीवसे ततो नो धेहि भेषज। ततो नो मह आवह वात आवातु भेषजं-शम्भूर्मयोभूर्नो हृदे प्रण आयूँषि तारिषत्-इन्द्रस्य गृहोऽसि तं त्वा

प्रपद्ये समुत्साश्वः–सह यन्मे अस्ति तेन भूः प्रपद्ये–भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवस्सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापते र्ब्रह्मकोशं ब्रह्म प्रपद्ये ओं प्रपद्ये ॥ "अन्तरिक्षं मउर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्तिमान्तया स्वस्त्या स्वस्तिमानसानि–प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मयि मेधां मयि प्रजां मय्यग्निः तेजो दधातु–मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु–मयि मेधां मयि प्रजां मयि सूर्यो भ्राजा दधातु। द्युभिरक्तुभिः परिपातमस्मान् अरिष्टेभिरश्विना सौभगेभिः। तन्नो मित्रो वरुणो मामहंतामदितिः सिन्धुः पृथिवी उत द्यौः–कया नश्चित्र आभुवदूती सदावृधस्सखा–कया शचिष्ठया-वृता–कस्त्वा सत्यो मदानां मँहि ँष्ठो मत्सदन्धस–दृढाचिदारुजे वसु अभी-षुणस्सखीनां अविता जरितॄणां–शतं भवास्यूतिभिः–वयस्सुपर्णा उपसेदुरिन्द्रं प्रिय मेधा ऋषयो नाथमानाः–अपध्वान्तमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्यस्मान्निधये वबद्धान्–शन्नो देवीरभिष्टय आपो भवन्तु पीतये–शंयोरभिस्रवन्तु नः। ईशाना वार्याणां क्षयन्तीश्चर्षणीनां–अपो याचामि भेषजं-सुमित्रा न आप ओषधय-स्सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः–"आपो हिष्टा मयो भुवस्तान ऊर्जे दधातन–महेरणाय चक्षसे–यो वश्शिवतमो रसस्तस्य भाजयते हनः–उशतीरिव मातरः–तस्मां अरङ्गमामवो यस्य क्षयाय जिन्वथ आपो जनयथा च नः–"पृथिवी शान्ता साग्निना शान्ता सा मे शान्ता शुचँ शमयतु अन्तरिक्षँ शान्तं तद्वायुना शान्तं तन्मे शान्तंशुचँ शमयतु–द्यौश्शान्ता सादित्येन शान्ता सा मे शान्ता शुचँ शमयतु–पृथिवी शान्तिरन्तरिक्षँ शान्तिः द्यौश्शान्तिर्दिशः शान्तिरवान्तरदिशाश्शान्तिरग्निश्शान्ति र्वायुश्शान्तिरादित्यश्शान्तिः चन्द्रमाश्शान्ति र्नक्षत्राणि शान्तिः आपश्शान्तिरोषधयश्शान्तिर्वनस्पतयश्शान्तिर्गौश्शान्तिरजा-

शान्तिरश्वश्शान्तिः पुरुषश्शान्तिर्ब्रह्म शान्तिर्ब्राह्मणश्शान्तिः शान्तिरेव शान्ति-श्शान्तिर्मे अस्तु शान्तिः–तयाहँ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मामाँ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मामाहासिषुः—उदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताँ अनु–तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्–पश्येम शरदश्शतं जीवेम शरदश्शतं नन्दाम शरदश्शतं मोदाम शरदश्शतं भवाम शरदश्शतँ शृणवाम शरदश्शतं प्रब्रवाम शरदश्शतमजीता स्याम शरदश्शतं ज्योक्च सूर्यं दृशे। "य उदगान्महतो-र्णवाद्विभ्राजमानस्सरिरस्य मध्यात्समांवृषभो लोहिताक्षस्सूर्यो विपश्चिन्मनसा पुनातु। ब्रह्मणश्चोतन्यसि ब्रह्मण आणीस्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीँ सदेवां यदहं वेद तदहं धारयाणि मा मद्वेदोऽधि विस्रसत्–मेधामनीषे माविशताँ समीची भूतस्य भव्यस्यावरुद्ध्यै सर्वमायुरयाणि सर्वमायुरयाणि–आभिर्गीर्भिर्य-दतो न ऊनं आप्यायय हरिवो वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अधते स्याम–ब्रह्म प्रावादिष्म तन्नो माहासीत्–ओं शान्तिश्शान्तिश्शान्तिः इत्यनुवाकं जपित्वा, वाचं यच्छेत् ॥

अथाचार्यः शिष्यस्य मुखं शिरो नववस्त्रेण प्रदक्षिणं संवेष्टयित्वा, अस्तमिते ग्रामं प्रापयेत्। तां रात्रिं शिष्यो वाग्यतस्तिष्ठेदासीत वा श्वो भूते ग्रामाद्बहिः गत्वा, शिरोवेष्टनवस्त्रमपनीय, आचार्याय दत्वा, अग्निमुद-कुम्भं आदित्यमाकाशं गिरिं वत्सं सुवर्णं च यथासम्भवं आचार्यदर्शितं दृष्ट्वा, "वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः–अपध्वान्त-

मूर्णुहि पुर्द्धिं चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्-इत्यादित्यमुपतिष्ठेत । आचार्यः अभ्युदयं पुण्याहं च कुर्यात् ॥

## सौम्यव्रतोत्सर्जनम्

आचार्यः अमुकगोत्रं अमुकशर्माणं माणवकं सौम्यव्रतोत्सर्जनेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, माणवकं सौम्यव्रतोत्सर्जनं च करिष्यामीति वाचयित्वा, वस्त्रादिधारणस्नानतर्पणादि पूर्ववत् कारयित्वा, अग्निप्रतिष्ठादि पात्रसादनान्ते, चतस्र औदुम्बरीस्समिध उदकुम्भं च सादयित्वा, अग्निमुखान्ते शिष्येणान्वारब्धः, "सोमाय काण्डर्षये स्वाहेत्यादि-सोमो धेनुं अषाढं युथ्सु-त्वँ सोम क्रतुभिः-या ते धामानि हविषा-त्वमिमा ओषधीस्सोम-याते धामानि दिवि या-सांहितीय ज्ञिक्रीवारुणीः ब्रह्माणँ स्वयम्भुवं सदसस्पतिं पूर्ववत प्रधानाहुतीश्च जुहुयात् – ततः शिष्यः पूर्ववत् कुम्भमुपस्पृश्य," नमो वाच" इत्यनुवाकं जपित्वा, अग्नेः पश्चात्तिष्ठन्, "द्यौस्समित्-तामादित्यस्समिन्धे – सादित्यँ समिन्धे –तामहँ समिन्धे सामा समिद्धा-आयुषा तेजसा-वर्चसा श्रिया-यशसा ब्रह्मवर्चसेन - अन्नाद्येन समिन्ताँ स्वाहा-दिव इदं । अन्तरिक्षँ समित्-तां वायुस्समिन्धे-सा वायुँ समिन्धे-तामहँ समिन्धे सा मा समिद्धा-आयुषा तेजसा-वर्चसा श्रिया-यशसा ब्रह्मवर्चसेन-अन्नाद्येन समिन्ताँ स्वाहा-अन्तरिक्षायेदं-पृथिवी समित् तामग्निस्समिन्धे-साग्निँ समिन्धे-तामहँ समिन्धे सा मा समिद्धा-आयुषा तेजसा-वर्चसा श्रिया-यशसा ब्रह्मवर्चसेन-अन्नाद्येन समिन्ताँ स्वाहा-पृथिव्या इदं । प्राजापत्या मे समिदसि सपत्नक्षयणी-भ्रातृव्यहा मेऽसि स्वाहा-प्रजापतय इदं । इति समिध आधाय "आदित्य व्रतपते काण्डर्षिभ्यः सौम्यव्रतमचारिषं-तदशकन्तन्मे राधि-वायो व्रतपते काण्डर्षिभ्यः– सौम्यव्रतम-

चरिषं-तदशकं तन्मे राधि-अग्ने-व्रतपते काण्डर्षिभ्यः-सौम्यव्रतमचारिषं-तद-शकन्तन्मे राधि-व्रतानां व्रतपते काण्डर्षिभ्यः-सौम्यव्रतमचारिषं-तदशकन्तन्मे राधि इत्यग्निमुपस्थाय, आचार्यः जयाभ्यान्युपस्थानान्तं कुर्यात् शिष्यः, कुम्भमुपस्पृश्य "शन्नो वातः पवता"मित्यनुवाकं जपेत्, अथाचार्यः अभ्युदयं पुण्याहं च कुर्यात् ॥

## -आग्नेयव्रतम्-

आचार्यः प्राणानायम्य, अमुकगोत्रममुकशर्माणं माणवकमाग्नेयव्रतेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, कृतप्राणायामं शिष्यं आग्नेयव्रतं चरिष्यामीति वाचयित्वा, वस्त्रोपवीतादि धारयित्वा, स्नानं कारयित्वा, निवीत्या अग्निं काण्डर्षिं तर्पयामि सांहितीर्याज्ञिकीर्वारुणीः ब्रह्माणं स्वयम्भुवं सदसस्पतिं च तिलाक्षतोदकैः त्रिस्त्रिः तर्पयित्वा, आचान्तं शिष्यं दक्षिणत उपवेश्य, प्राजापत्यव्रतवत् पात्रसादनाद्यग्निमुखान्ते शिष्येणान्वारब्धः, "अग्नये काण्डर्षये स्वाहा" अग्नये काण्डर्षय इदं । "अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्-युयोद्ध्यस्मज्जुहुराणमेनः-भूयिष्ठां ते नम उक्तिं विधेम स्वाहा" अग्नय इदं । "प्रवश्शुक्राय भानवे भरध्वं हव्यं मतिञ्चाग्नये सुपूतं यो दैव्यानि मानुषा जनूँषि अन्तर्विश्वानि विद्मना जिगाति स्वाहा अग्नय इदं । अच्छा गिरो मतयो देवयन्तीः अग्निं यन्ति द्रविणं भिक्षमाणः-सुसन्दृशँ सुप्रतीकँ स्वञ्चं-हव्यवाहमरतिं मानुषाणां स्वाहा अग्ने त्वमस्मद्युयोद्ध्यमीवाः-अनमित्रा अभ्यमन्त कृष्टीः-पुनरस्मभ्यँ सुविताय देव क्षां विश्वेभिरजरेभिर्यजत्र स्वाहा अग्नय इदं । "अग्ने त्वं पारया नव्यो अस्मान् स्वस्तिभिरति दुर्गाणि विश्वा-पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः स्वाहा अग्नय इदं । "प्रकारवो मनना वच्यमानाः देवद्रीचीं नयथ

देवयन्तः-दक्षिणावाड्वाजिनी प्राच्येति-हविर्भरन्त्यग्नये घृताची स्वाहा-अग्नय इदं। साहितीभ्यो याज्ञिकीभ्यो वारुणीभ्यो ब्रह्मणे स्वयम्भुवे सदसस्पतये च हुत्वा, माणवकः "अग्ने व्रतपते काण्डर्षिभ्यः-आग्नेयव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यताम्। वायो व्रतपते काण्डर्षिभ्यः-आग्नेयव्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्-आदित्य व्रतपते काण्डर्षिभ्यः-आग्नेयव्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्। व्रतानां व्रतपते काण्डर्षिभ्यः आग्नेयव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यताम्। इत्यग्न्युपस्थान कारयित्वा, जयाद्य-ग्न्युपस्थानान्ते अभ्युदयं पुण्याहं च कुर्यात् ॥

## ॥ आग्नेयव्रतोत्सर्जनम् ॥

आचार्यः प्राणानायम्य, अमुकगोत्रममुकशर्माणं माणवकं आग्नेय-व्रतोत्सर्जनेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, आग्नेयव्रतोत्सर्जनं चरिष्यामीति शिष्यं वाचयित्वा, उपवीतादिधारणस्नानतर्पणादि पूर्ववत् कारयित्वा, अग्नेरुपसमाधानाद्यग्निमुखान्ते शिष्येणान्वारब्धः, अग्नये काण्डर्षये स्वाहा अग्नये काण्डर्षये इदं। "अग्ने नय-प्रवश्शुक्राय-अच्छा गिरो मतयो-अग्ने त्वमस्मत्-अग्ने त्वं पारय-प्रकारवो मनना, इति षट्, साहितीः याज्ञिकीः वारुणीः ब्रह्माणं स्वयंभुवं सदसस्पतिं च प्रधानाहुतीर्हुत्वा," अग्ने व्रतपते काण्डर्षिभ्यः-आग्नेयव्रतमचारिषं-तदशकं तन्मे राधि। वायो व्रतपते काण्ड-र्षिभ्यः-आग्नेयव्रतमचारिषं तदशकं तन्मे राधि। आदित्य व्रतपते काण्डर्षिभ्यः आग्नेयव्रतमचारिषं-तदशकं तन्मे राधि। व्रतानां व्रतपते काण्डर्षिभ्यः आग्नेयव्रतमचारिषं-तदशकं तन्मे राधि। इति शिष्येणोपस्थानं कारयित्वा, जयाद्यग्न्युपस्थानान्ते अभ्युदयं पुण्याहं च कुर्यात् ॥

-वैश्वदेवव्रतम्-

आचार्यः प्राणानायम्य अमुकगोत्रममुकशर्माणं माणवकं वैश्वदेवव्रतेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, वैश्वदेवव्रतं चरिष्यामीति शिष्यं वाचयित्वा, उपवीतादिधारणं स्नानं "विश्वान् देवान् काण्डर्षींस्तर्पयामि-सांहितीः याज्ञिकीः वारुणीः ब्रह्माणं स्वयंभुवं सदसस्पतिं च तर्पयित्वा, अग्नेरुपसमाधानाद्यग्निमुखान्ते शिष्येणान्वारब्धः, विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा-विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदं। "आनो विश्वे अस्त्रागमन्तु देवाः-मित्रो अर्यमा वरुणस्सजोषाः-भुवन्-यथा नो विश्वे वृधासः-करन्थ्सुषाहा विधुरन्तशवः स्वाहा विश्वेभ्यो देवेभ्य इदं। शन्नो देवा विश्वदेवा भवन्तु-शँ सरस्वती सह धीभिरस्तु-शमभिषाचश्शमुरातिषाहः-शन्नो दिव्या पार्थिवाश्शन्नो अप्यास्स्वाहा विश्वेभ्यो देवेभ्य इदं। ये सवितुस्सत्यसवस्य विश्वे-मित्रस्य व्रते वरुणस्य गोपाः(देवाः)-ते सौभगं वीरवद्गोमदप्नः-दधातन द्रविणं चित्रमस्मे स्वाहा- विश्वेभ्यो देवेभ्य इदं। अग्ने याहि दूत्यं वारिषेण्यः-देवाँ अच्छा-ब्रह्मकृता गणेन। सरस्वतीं मरुतो अश्विनापः-यक्षि देवान् रत्नधेयाय विश्वान्थ्स्वाहा-विश्वेभ्यो देवेभ्य इदं। द्यौ पितः पृथिवी मातरध्रुक् अग्ने भ्रात र्वसवो मृडातानः। विश्व आदित्या अदिते सजोषाः-अस्मभ्यँ शर्म बहुलं वियन्तु स्वाहा विश्वेभ्यो देवेभ्य इदं। विश्वे देवाः शृणुतेमँ हवं मे ये अन्तरिक्षे य उपद्य विष्ठ-ये अग्निजिह्वा उतवा यजत्राः आसद्यास्मिन् बर्हिषि मादयध्वँ स्वाहा। विश्वेभ्यो देवेभ्य इदं। सांहितीभ्यो याज्ञिकीभ्यो वारुणीभ्यो ब्रह्मणे स्वयम्भुवे सदसस्पतये च हुत्वा-अग्ने व्रतपते काण्डर्षिभ्यः वैश्वदेवव्रतं चरिष्यामि-तच्छकेयन्तन्मे राध्यतां। वायो व्रतपते काण्डर्षिभ्यः-वैश्वदेवव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यताम्। आदित्य व्रतपते काण्डर्षिभ्यः-वैश्वदेवव्रतं चरिष्यामि-तच्छकेयं

तन्मे राध्यताम्। व्रतानां व्रतपते काण्डर्षिभ्यः-वैश्वदेवव्रतं चरिष्यामि-तच्छकेयं तन्मे राध्यताम्। इति चतुर्भिरुपस्थानं कारयित्वा, जयाद्यग्न्युपस्थानान्तं कृत्वा, अभ्युदयं पुण्याहं च कुर्यात्॥

## -वैश्वदेवव्रतोत्सर्जनम्-

आचार्यः प्राणानायम्य, अमुकगोत्रममुकशर्माणं माणवकं वैश्वदेवव्रतोत्सर्जनेन कर्मणा संस्करिष्यामीति सङ्कल्प्य, वैश्वदेवव्रतोत्सर्जनं चरिष्यामीति शिष्यं वाचयित्वा, उपवीतादिधारणस्नानतर्पणादि पूर्ववत् कारयित्वा, अग्नेरुपसमाधानाग्निमुखान्ते शिष्येणान्वारब्धः, "विश्वेभ्यो देवेभ्यः काण्डर्षिभ्यः स्वाहा-विश्वेभ्यो देवेभ्यः काण्डर्षिभ्य इदं। आ नो विश्वे, शन्नो देवा, ये सवितुः, अग्ने याहि द्यौः पितः पृथिवी, विश्वे देवाः शृणुतेति षड्भिः षडाहुतीः, सांहितीः याज्ञिकीः वारुणीः ब्रह्माणं स्वयम्भुवं सदसस्पतिं च प्रधानाहुतीः हुत्वा,-"अग्ने व्रतपते काण्डर्षिभ्यः-वैश्वदेवव्रतमचारिषं तदशकं तन्मे राधि। वायो व्रतपते काण्डर्षिभ्यः-वैश्वदेवव्रतमचारिषं-तदशकं तन्मे राधि। आदित्य व्रतपते काण्डर्षिभ्यः-वैश्वदेवव्रतमचारिषं-तदशकं तन्मे राधि-व्रतानां व्रतपते-काण्डर्षिभ्यः-वैश्वदेवव्रतमचारिषं-तदशकं तन्मे राधि"। इति चतुर्भिः शिष्येण उपस्थानं कारयित्वा, जयाद्यग्न्युपस्थानान्तेऽभ्युदयं पुण्याहं च कुर्यात्। व्रतानां उत्सर्जनानां च एकदा करणे सकृदेवाभ्युदयं पृथक् पुण्याहं च कुर्यात्॥

## -स्नानकर्म-

स्नानकर्म करिष्यमाणः सूर्योदयात् पूर्वं व्रजं प्रविश्यान्तर्लोम्ना चर्मणा व्रजद्वारं प्रच्छाद्यासायं तत्रैव वसेत् अस्मिन्नहनि बहिरातपे न निर्गच्छेत् प्राणानायम्य, मध्यन्दिने स्नानकर्म करिष्य इति सङ्कल्प्य, अग्निप्रतिष्ठादि-

पात्रसादनान्ते पालाशीं समिधं कटं क्षुरं शीतमुष्ण च जलं यवान् शकृत् दर्भान् औदुम्बरं दन्तकाष्ठं स्नानीयं नववस्त्रद्वयं उपवीतद्वयं चन्दनं सोपधानं सूत्रप्रोतं मणि बादरं मणि कुण्डलद्वयं स्रजमञ्जनमादर्शमुपानहो छत्रं वैणव दण्डं च सादयित्वा, आज्यभागान्ते पालाशीं समिधं आज्याभ्यक्तां-"इमँ स्तोममर्हते जातवेदसे रथमिव सं महे मा मनीषया-भद्रा हि नः प्रमतिरस्य सँसद्यग्ने सख्ये मारिषामा वयं तव" इत्यग्नावाधाय, अग्नेः पश्चात् कट एरकायां वा उपविश्य, त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम्" । इति क्षुरमभिमन्त्र्य, "शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु, मा माहिँसीः-इति क्षुरं कस्मैचिन्मन्त्रविदे ब्राह्मणाय प्रयच्छेत् । स मन्त्रवित् "उष्णेन वायवुदकेने ह्यदितिः केशान् वपतु" इत्यादिकेशनिधान-पर्यन्तं चौलवद्दिग्वपनं करोति । नापितेन सर्वाङ्गवपनं कारयित्वा, स्नात्वा व्रजस्य पश्चार्धे उपविश्य, मौञ्जीं विसृज्य, ब्रह्मचारिणे प्रयच्छेत् । ब्रह्मचारी तां मौञ्जीं इदमहं यज्ञशर्मणो गार्ग्यायणस्य पाप्मानमपगूहाम्युत्तरो यज्ञशर्मा द्विषद्भ्यः-"आपो हिष्ठा मयो भुव" इति तिसृभिः, "हिरण्यवर्णाः शुचयः पावकाः" इति तिसृभिः, शीतोष्णाभिरद्भिः स्नात्वा, अन्नाद्याय व्यूहध्व दीर्घायुरहमन्नादो भूयासं-इत्यौदुम्बरेण दन्तकाष्ठेन प्रदक्षिणं दन्तधावनं कृत्वा. धात्रीपिष्टादिना स्नानीयेन देहं शिरश्चानुलिप्य, स्नात्वा ।

"सोमस्य तनूरसि तनुव मे पाहि स्वा मा तनूराविश"इति अहतमन्तर्वासः परिधाय, द्विराचम्य, उपवीतद्वय धृत्वा, "नमो ग्रहाय चाभिग्रहाय च नमश्शाकजं जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः "इति कस्तूरिकाभिः गन्धद्रव्यैः वासितं चन्दन देवताभ्यः प्रदाय" अप्सरस्सु यो च गन्धो गन्धर्वेषु च यशः । दैवो यो मानुषो गन्धस्समा गन्धस्सुरभिर्जुषतां" इति

गन्धेनात्मानमनुलिंप्य वज्रवैडूर्यादिनोभयतः परिगृहीतं सूत्रप्रोतं सौवर्णं मणिं "इयमोषधे त्रायमाणा सहमाना सहस्वती–सा मा हिरण्यवर्चसं ब्रह्मवर्चसिनं मा करोतु"इत्युदपात्रे त्रिः प्रदक्षिणमावृत्य, "अपाशोऽस्युरो मे मा सँशारीरिशिवो मोपतिष्ठस्व दीर्घायुत्वाय शतशारदाय शतँ शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय"–इति कण्ठे तं मणिमाबध्य, सूत्रप्रोतं बादरं मणिं पूर्ववत् तूष्णीमुद-पात्रे त्रिरावृत्य, सव्ये पाणावाबध्नीयात् अथ मन्त्रवित् कश्चित् ब्राह्मणः "रेवतीस्त्वा व्यक्ष्णन्, कृत्तिकाश्चाकृतँस्त्वा–धियो वयन्नवग्ना आवृञ्जन्थसहस्र-मन्ताँ अभितो अयच्छन्। देवीर्देवाय परिधी सवित्रे–महत्तदासामभवन् महित्वनम्" "इति द्वाभ्यां नवं वस्त्रमभिमन्त्र्य", या अकृन्तन् अवयन् या अतन्वत याश्च देवीरन्तानभितोऽददन्त–तास्त्वा देवीर्जरसे संव्ययस्त्वायुष्मान् इदं परिधत्स्व वासः–परिधत्त धत्त वाससैनं शतायुषं कृणुत दीर्घमायुः-बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवा उ–जरां गच्छासि परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा–शतं च जीव शरदस्सुवर्चा रायश्च पोषमुप संव्ययस्व" इति तिसृभिरुत्तरीयं, धारयित्व, धृतोत्तरीयं तं "परीदं वासो अधिधा स्वस्तये भूरापीनामभिशस्तिपावा–शतं च जीव शरदः पुरूचीः वसूनि चार्यो विभजासि जीवन् इत्यनुमन्त्रयेत्। अथोत्तरीयस्य दशायां कुण्डले बध्वा, ते दर्व्या अग्रे स्थापयित्वा, सव्येन हस्तेन तयोरुपरि आज्यमानीय तेनाज्येन आयुष्यं वर्चस्यमित्याद्यष्टाहुतीः प्रतिमन्त्रं जुहोति। "आयुष्यं वर्चस्यँ सुवीर्यं रायस्पोषमौद्भिदं–इदं हिरण्यं जैत्र्या या विशतान्माँ स्वाहा–हिरण्या-येदं। "उच्चैर्वादि पृतनाजि सत्रासाहं धनञ्जयं–सर्वास्समृद्धी ऋद्धयो हिरण्येऽ-स्मिन्त्समाहिताः स्वाहा–हिरण्यायेदं। शुनमहँ हिरण्यस्य पितुरिव नामाग्र-भैषं–तं मा हिरण्यवर्चसं पूरुषुप्रियं कुरु स्वाहा–हिरण्यायेदं। प्रियं मा देवेषु

कुरु प्रियं मा ब्रह्मणे कुरु-प्रियं विश्येषु शूद्रेषु प्रियँ राजसु मा कुरु स्वाहा हिरण्यायेदं । "या तिरश्ची निपद्यतेऽहँ विधरणी इति-तां त्वा घृतस्य धारया यजे सँराधनीमहँ स्वाहा-संराधन्या इदं ।  सँ राधन्यै देव्यै  स्वाहा-सँ राधन्या इदं ।  प्रसाधन्यै  देव्यै  स्वाहा-प्रसाधन्या इदं ।  सम्राजं  च विराजं चाभिश्रीः या च नो गृहे लक्ष्मी राष्ट्रस्य या मुखे तया मा सँसृजामसि स्वाहा-लक्ष्म्या इदं ।  कुण्डले अपनीय, जयाद्यग्न्युपस्थानान्तं कृत्वा, आयुष्यं  वर्चस्यमित्याद्याष्टाभिरेव  दक्षिणे  कर्णे, पुनश्च ताभिरेव सव्ये कर्णे क्रमेण कुण्डले धृत्वा," शुभिके शिर आरोहशोभयन्ती मुख मम-मुखँ हि मम शोभय भूयाँसं च भगं कुरु-यामाहरज्जमदग्निः श्रद्धायै कामायान्यै-इमां तामपि नह्येहं  भगेन  सह वर्चसा" इति द्वाभ्यां  शिरसि  स्रजमाबद्ध्य "यदाञ्जनं त्रैककुदं जातँ हिमवत उपरि-तेन वामांजे तेजसे वर्चसे भगाय च । मयि पर्वत पूरुषं मयि पर्वत वर्चसं मयि पर्वत भेपजं मयि पर्वतायुषं-तन्मे वर्चः परागतमात्मानमुपतिष्ठति" इति द्वाभ्यां अक्ष्णोः युगपदञ्जनं धृत्वा "इदं तत्पुनराददे दीर्घायुत्वाय वर्चसे"-इत्यादर्शं अवेक्ष्य, "प्रतिष्ठेस्थो देवतानां मामा सन्तातं इत्युपानहौ युगपद्धृत्वा, तूष्णीं, छत्रमादाय, "प्रजापतेश्शरणमसि ब्रह्मणश्छदिर्विश्वजनस्य छायासि सर्वतो मा पाही"त्यात्मानमाच्छाद्य, "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे द्विषतो वधायेन्द्रस्य वज्रोऽसि वार्त्रघ्नश्शर्म मे भव यत्पापं तन्निवारय" इति शिरः प्रमाणमृजुं सत्वचं असुषिरं युग्मपर्वयुक्तं सकल्माषं काकपृष्ठरहितं वैष्णवं दण्डमादाय, आनक्षत्रोदयान्मौनी  भूत्वा,  उदितेषु नक्षत्रेषु  प्राचीमुदीचीं  वा  दिशमुपनिष्क्रम्य, "देवीष्षडुर्वीरुरुणः कृणोत  विश्वे देवास इह वीरयध्वं" इति  प्रागाद्यधरान्ताः षड्दिश  उपस्थाय," माहा स्महि  प्रजया मा तनूभिर्माऽरधाम द्विषते सोम राजन्

इति नक्षत्राणि चन्द्रमसं च युगपदुपस्थाय, अभ्युदयं पुण्याहं च कृत्वा, मित्रेण सहालोच्य, विवाहं सन्न्यासं वा कुर्यात् ॥

## ॥ तूष्णीं स्नानम् ॥

एवं स्नानकर्म कर्तुमशक्तः ब्राह्मणाननुज्ञाप्य, प्राणानायम्य, तूष्णीं स्नानकर्म करिष्य इति सङ्कल्प्य, सर्वाङ्गवपनं कारयित्वा, स्नात्वा, मौञ्जीं विसृज्य, ब्रह्मचारिणे दत्त्वा, दन्तधावनाद्युत्तरीयधारणान्तं अमन्त्रं कृत्वा, अग्निं प्रतिष्ठाप्य, परिस्तीर्य, परिषिच्य, प्रजापतिं मनसा ध्यायन् तूष्णीं पालाशीं समिधमग्नावाधाय, परिषिच्य, कुण्डलधारणादीनि सर्वाण्यमन्त्रकं कृत्वा, अभ्युदयं पुण्याहं च कुर्यात्। समावर्तनप्रभृति अहरहः सायं प्रातर्लौकिकाग्निं प्रतिष्ठाप्य, परिस्तीर्य, आज्यं दर्वीं च संस्कृत्य, परिषिच्य, व्यस्ताभिः समस्ताभिः व्याहृतिभिः आज्येन अनाज्ञातमित्यादिभिश्च हुत्वा, परिषिच्याग्निमुपतिष्ठेत्। सन्न्यासं कर्तुकामोऽपि च व्रतानि समावर्तनं च कृत्वैव सन्न्यसेत्। नैष्ठिकस्तु सोत्सर्जनानि चत्वारि व्रतानि चरित्वा, समावर्तनमपि कृत्वैव काषायवासा यावज्जीवं ब्रह्मचर्यं चरेत्। उपकुर्वाण उद्वहेत् सन्न्यसेद्वा ॥

### –अथ विवाहः–

नमस्सदस इति सदस्यान् प्रणम्य, विष्वक्सेनं सम्पूज्य, विवाहं करिष्यमाणः स्वयं वान्योवा प्राणानायम्य, पञ्चपालिकाशुद्ध्यर्थं शुद्धिपुण्याहं वाचयिष्य इति पुण्याहं वाचयित्वा, पुण्याहजलेन कूर्चेन व्याहृतिभिः पञ्चपालिकाः प्रोक्ष्य, प्राणानायम्य, अमुकगोत्रस्यामुकशर्मणो वरस्य अमुकगोत्राया अमुकनाम्न्याः कन्यायाश्च उभयोरुद्वाहकर्माङ्गं प्रतिसरबन्धकर्म करिष्य इति सङ्कल्प्य, "ब्रह्मजज्ञानमिति उल्लेखनादि नमो ब्राह्मण इति परिधानीयजपान्तं कृत्वा,–

कूर्चेन व्याहृतिभिः कुम्भजलेन प्रतिसरसूत्रं हस्तं च प्रोक्ष्य, त्र्यम्बकमिति हरिद्रादिना प्रतिसरसूत्रं त्रिरुमृज्य, तण्डुलपूर्णं कन्याया हस्तं "अग्निरायुष्मा- निति" पञ्चभिः गृहीत्वा, "बृहत्साम" इति कन्याहस्ते प्रतिसरसूत्रं बद्ध्वा, वरस्य हस्तं अग्निरायुष्मानिति गृहीत्वा, वरस्य हस्ते विश्वेत्तात इति बध्वा, घृतसूक्तेन रक्षां कुर्यात् ॥

–वरप्रेषणम्–

वरः प्राणानायम्य, वरान् प्रेषयिष्य इति सङ्कल्प्य, सुहृदः समवेतान् मन्त्रविदो वरान् प्रहिणुयात् तानादितो द्वाभ्यामभिमन्त्रयेत। "प्रसुग्मन्ता धियसानस्य सक्षणि वरेभिर्वरॉं अभिषुप्रसीदत–अस्माकमिन्द्र उभयं जुजोषति यत्सौम्यस्यान्धसो बुबोधति–अनृक्षरा ऋजवस्सन्तु पन्था येभिस्सखायो यन्ति नो वरेय–समर्यमा संभगोनोनिनीयात्संजास्पत्यँ सुयममस्तु देवाः–यूयममुकगोत्रां मह्यं कन्यां वृणीध्वं इति प्रेषयेत्। ततस्ते कन्यावन्तं गत्वा अमुकगोत्रस्य अमुकशर्मणो नप्त्रे, अमुकगोत्रस्य अमुकशर्मणः पौत्राय, अमुकगोत्रस्य अमुक- शर्मणः पुत्राय, अमुकगोत्रायामुकशर्मणे वराय–अमुकगोत्रस्यामुकशर्मणो नप्त्रीं, अमुकगोत्रस्यामुकशर्मणः पौत्रीं, अमुकगोत्रस्यामुकशर्मणः पुत्रीं, अमुकगोत्रजां अमुकनाम्नीं भवदीयामिमां कन्यां धर्मप्रजार्थं वृणीमह इति वृत्वा, कन्यावता दास्यामीत्युक्ते प्रत्येत्य, सिद्धार्था वयमिति वराय निवेदयेयुः। दुहितृमतो गृहं वरमानयेयु–अथोपोषितः कन्यादाता प्राणानायम्य, श्रीगोविन्देत्यादि-अस्यां शुभतिथौ दशानां पूर्वेषां दशानां परेषामात्मनश्चैकविंशतिकुलोत्तारणार्थं कन्य- कादानाख्यमहादानं करिष्ये, वरस्य पादौ प्रक्षाल्याचमय्यामुकगोत्रस्यामुक- गोत्रस्यामुकशर्मणो नप्त्रे, अमुकगोत्रस्य अमुकशर्मणः पौत्राय, अमुकगोत्रस्या- मुकशर्मणः पुत्रायामुकगोत्रायामुकशर्मणे वराय–अमुकगोत्रस्यामुकशर्मणो नप्त्रीं,

अमुकगोत्रस्यामुकशर्मणः पौत्रीं, अमुकगोत्रस्याममुकशर्मणः पुत्रीं, अमुकगोत्रजां अमुकनाम्नीं मदीयामिमां कन्यां तुभ्यमहं प्रजासहत्वकर्मभ्यः प्रतिपादयामि, कन्याप्रेषणपूर्वमिति केचित्।

कन्यां कनकसम्पन्नां सर्वाभरणभूषिताम्।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥
कन्ये ममाग्रतो भूयाः कन्ये मे देहि पार्श्वतः ॥
कन्ये मे सर्वतो भूयाः त्वद्दानान्मोक्षमाप्नुयात् ॥
विश्वम्भरः पञ्चभूतः साक्षिणः सर्वदेवताः।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥

इत्युच्चार्य, सहिरण्याक्षतोदकं कन्याया दक्षिणहस्तं वरस्य दक्षिणहस्ते दत्वा, तस्मिन् काले वराय गोभूवस्त्रभूषणालङ्कारादि दद्यात् ॥

ततस्तां कन्यां "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां कन्यां प्रतिगृह्णामि, इति प्रतिगृह्य, तया सह विवाहस्थाने प्राङ्मुख उपविश्य, पवित्रपाणिः प्राणानायम्य, श्रीगोविन्देत्यादि उद्वाहकर्म करिष्य इति सङ्कल्प्य, स्थण्डिलं कल्पयित्वा—

प्राचीः पूर्वमुदक्सँस्थं दक्षिणारम्भमालिखेत्।
अथोदीचीः पुरस्सँस्थं पश्चिमारम्भमालिखेत् ॥

अवाक्करोऽभ्युक्ष्य, तृणं नैर्ऋत्यां निरस्याप उपस्पृश्य, निधाय, वह्निं प्राच्यां उदीच्यां वा उत्सृज्यतेवोक्षणतोयशेषं प्राक्तोयमन्यन्निदधात्युदग्वा यथा बहिः स्याच्च परिस्तराणां पुनः कन्या गृहं गच्छेत, दाता प्राणानायम्य, मधुपर्क-दानं करिष्य इति सङ्कल्प्य, यत्रास्मा अपचितिं कुर्वन्ति तत्कूर्चे उपविशति।

यथा पुरस्तात्, अयं कूर्चः प्रतिग्रहीता सुकूर्चः तस्मिन्नुत्तरेण यजुषोपविशति "राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषं-दाता आपः पाद्या इति प्राह पाद्या आपः प्रतिग्रहीता उत्तरयाभिमन्त्र्य आपः पादावनेजनीः द्विषन्त नाशयन्तु मे अस्मिन्कुले ब्रह्मवर्चस्यसानि"। दक्षिणं पूर्वं ब्राह्मणाय प्रयच्छेत्। दाता पूर्ववत् पादौ प्रक्षालयेत्। वरोऽप उपस्पृश्य, प्रक्षालयितारं दक्षिणे भुजे स्पृष्ट्वा, प्रतिलोमेन पाणिना "मयि महो मयि यशो मयीन्द्रियं वीर्यं-इति स्वहृदयमभिमृश्य, अप उपस्पृश्य, आचामेत्। दाता मृण्मये पात्रे पुष्पा-क्षतसंयुक्तजलमानीय, सकूर्चाभ्यां पाणिभ्यां अधस्तादुपरिष्टाच्च परिगृह्य, अर्हणीया आपः इति ब्रूयात्। वरस्तु-"आ मागन् यशसा वर्चसा सँसृज पयसा तेजसा च-तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनां-इत्यभिमन्त्र्य, तदेक-देशे दात्रा स्वाञ्जलौ दीयमाने "विराजो दोहोऽसि विराजो दोहमशीय मम पद्याय विराज" इति जपित्वा, तच्छेषं दात्रा पुरस्तान्नीयमानं "समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत-अच्छिद्रः प्रजया भूयासं मा परासेचि-मत्पयः-इत्येतयानुमन्त्रयेत्-दाता वराय वस्त्रकुण्डलाङ्गुलीयादि दत्वा, दाता दधि मध्विति संसृज्य, कांस्येन वर्षीयसा पिधाय, कूर्चाभ्यां परिगृह्य, मधुपर्क इति प्राह-अयं मधुपर्को मधुपर्कः प्रतिग्रहीता उत्तराभ्यामभिमन्त्र्य "त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि-तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनां आमागन् यशसा वर्चसा सँसृज पयसा तेजसा च। तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्। यजुर्भ्यामप आचामति। पुरस्तादु-परिष्टाच्च "अमृतोपस्तरणमसि" इत्यपः पीत्वा, उत्तरया त्रिः प्राश्य, "यन्मधुनो मधव्यं परममन्नाद्यं वीर्यं-तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमो-न्नादो मधव्योऽसानि-इति मधुपर्कं त्रिः प्राश्य, सकृन्मन्त्रेण द्विस्तूष्णीं "अमृता-

पिधानमसि" पुनरपः प्राश्य, पाणी प्रक्षाल्याचम्य, शेषमनुक्रम्प्यायं प्रयच्छेत्। दाता गौरिति गां प्राह, प्रतिग्रहीता उत्तरयाऽभिमन्त्रय, अस्यपहतपाप्मा अप पाप्मानं जहि अमुकशर्मणो "मम च" अमुकशर्मणोऽ"मुष्य च" "अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः-यद्युत्सृजेदुपांशून् मन्त्रान् जपित्वा, "अरिष्ट-मस्माकं कृण्वन् ब्राह्मणेभ्यः-यज्ञो वर्धतां यज्ञस्य वृद्धि अनुवर्द्धापचितिरस्या-पचितं मा कुर्वेपचितोऽह मनुष्येषु भूयासं-गौर्धेनु भव्या माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः-प्रणु वोचं चिकितुषे जनाय-मागाम-नागामदितिं वधिष्ट-पिबतूदकं तृणान्यत्तु-ओमुत्सृजतेत्युच्चैः, दाता भूतं इत्यन्तं ब्रूयात्। प्रतिग्रहीता उपांशूत्तरैरभिमन्त्रय-सुभूतं-सा विराट् तन्मा क्षायि तस्य तेऽशीय तन्म ऊर्जधः ओं कल्पयत ततो दाता वरं भोजयेत् ततो वरः तण्डुलराशिस्थां धान्यराशिस्थां वा कन्यां दृष्ट्वा, "अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पते इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितस्सुव" इति जपित्वा, चक्षुरुपसङ्गृह्य, अघोरचक्षुरपतिघ्न्येधि शिवा पतिभ्यस्सुमनास्सुवर्चाः-जीवसूर्देवकामा स्योना शन्नो भव द्विपदे शञ्चतुष्पदे" इति कन्यादृष्टौ स्वदृष्टिं निपात्य, अवयवश-स्समीक्ष्य, तया सह दर्भेष्वासीनः प्राणानायम्य, आवाभ्यां कर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्याः। पत्न्यर्थं पुनः प्राणानायम्य, आवाभ्यां कर्माणि कर्तव्यानि प्रजाश्चोत्पादयितव्याः इति पत्नीं वाचयति। अङ्गुष्ठानामिकाभ्यां दर्भं सङ्गृह्य, तेन "इदमहं या त्वयि पतिघ्न्यलक्ष्मिस्तां निर्दिशामि" इति तस्याः भ्रुवोः मध्यं सम्मृज्य, पश्चान्निरस्याप उपस्पृश्य, तया तन्मात्रादिभिर्वा अन्योन्यवियोगचिन्तया रोदने कृते "जीवाँ रुदन्ति विमयन्तो अध्वरे दीर्घामनु प्रसितिं दीर्घायुर्नरः-वामं पितृभ्यो य इदँ समेरिरेमयः पतिभ्यो जनयः परिष्वजे" इति जपेत्। ततो वेदविदः समवेतान् चतुरो ब्राह्मणान् वधूस्नानार्थं उद-

कुम्भमाहर्तुं "व्युक्षत्क्रूमुदचन्त्वाप आस्यै ब्राह्मणास्स्नपनँ हरन्तु–अवीरघ्नीरुद-चन्त्वापः"–इति उच्चैः प्रेषयेत्। ते च यत्र पूर्वं पुरुषाः स्नानादिषु न मृताः–तत उदकमानयेयुः–अथ, वरो दर्भैः कृतं वलयं अर्यम्णो अग्निं परि-यन्तु क्षिप्रं प्रतीक्षन्ताँ (श्वश्र्वो) देवराश्च इति तस्याश्शिरसि निधाय, तदुपरि खेनसः खेरथः खेयुगस्य शचीपते–अपालामिन्द्र–त्रिः पूर्त्व्यकरत्सूर्यवर्चसम्—इति दक्षिणं बाह्ययुगच्छिद्रं निधाय, तस्मिश्छिद्रे–"शन्ते हिरण्यँ शमु सन्त्वा-शिपश्शन्ते मेधी भवतु शं युगस्य तृद्म–शन्त आपश्शतपवित्रा भवन्त्वथा पत्या तन्वँ सँसृजस्व। इति हिरण्यमन्तर्धाय, पूर्वमाहृतेन जलेन "हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुर्हित्वाऽवद्यमापः–शतं पवित्रा वितता ह्यासु ताभिष्ट्वा देवस्सविता पुनातु–हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्वग्निः या अग्निं गर्भं दधिरे सुवर्णास्तास्त आपश्शँ स्योना भवन्तु यासाँ राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्। या अग्निं गर्भं दधिरे सुवर्णा-स्तास्त आपश्शँस्योना भवन्तु–यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा निविष्टाः–या अग्निं गर्भं दधिरे सुवर्णास्तास्त अपँ स्योना भवन्तु। शिवेन त्वा चक्षुषा पश्यन्त्वापः शिवया तन्वोपस्पृशन्तु त्वचं ते। घृतश्चुत-श्शुचयो याः पावकास्तास्त आपःशँ स्योना भवन्तु "इति पञ्चभिः स्नाप-यित्वा, "परित्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः" इति अहतं वासः परिधाप्य, द्विराचमय्य, आसीनायाः प्राङ्मुख्या वध्वाः कण्ठे माङ्गल्यसूत्रं—

माङ्गल्यतन्तुनाऽनेन मम जीवनहेतुना ॥
कण्ठे बध्नामि सुभगे त्वं जीव शरदां शतम् ॥

इति बध्वा "आशासाना सौमनसं प्रजाँ सौभाग्यं तनूं। अग्नेरनुव्रता

भूत्वा सन्नह्ये सुकृताय कं" तस्याः कटिदेशे योक्त्रेण सन्नह्य, स्वस्य दक्षिण-हस्तेन तस्या दक्षिणं हस्तं गृहीत्वा, "पूषा त्वेतो नयतु हस्त गृह्याश्विनौ त्वा प्रवहताँ रथेन-गृहान् गच्छ गृहपत्नी यथाऽसो वशिनी त्वं वितथमावदासि" इति अग्नेरभिमुखमानीय, अग्नेः पश्चादुदगग्रं कटमास्तीर्य, तस्मिन् दक्षिणतो वधूः उत्तरतः स्वयं च युगपदुपविश्य, अग्निं परिस्तीर्य, अग्नेरुत्तरतः दर्भान् द्वंद्वं न्यञ्चि पात्राणि प्रयुनक्ति । दर्वीमाज्यस्थालीं प्रोक्षणीं प्रणीतिमिध्ममितर-दर्वीं च सादयित्वा, तदुत्तरतः अश्मानं लाजांश्च युगपत्सादयित्वा, आयामतः परीमाणमित्यादि आज्यभागान्ते, "सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः-तृतीयो अग्निष्टे पतिः तुरीयस्ते मनुष्यजाः-सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये-रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम्-इति पत्नीमभिमन्त्र्य, तस्या उत्तान साङ्गुष्ठं दक्षिणं हस्तं अवाचीनेन स्वदक्षिणहस्तेन "गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः-भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः-तेह पूर्वे जनासो यत्र पूर्ववहो हिताः-मूर्धन्वान् यत्र सौभ्रवः पूर्वो देवेभ्य आतपत्-सरस्वति प्रेदमव सुभगे-वाजिनीवति-तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः-य एति प्रदिशस्सर्वा दिशोऽनु-पवमानः हिरण्यहस्त ऐरम्यः सत्वा मन्मनसं कृणोतु" इति चतसृभिः हस्तं गृहीत्वा, तया सहोत्थाय, अग्नेरुत्तरतो गत्वा, तत आरभ्य, प्रागायतनानि उदगायतनानि वा सप्तपदानि "एकमिषे विष्णुस्त्वान्वेतु द्वे ऊर्जे विष्णुस्त्वान्वेतु त्रीणि व्रताय विष्णुस्त्वान्वेतु-चत्वारि मायो भवाय विष्णुस्त्वान्वेतु पञ्च पशुभ्यो विष्णुस्त्वान्वेतु षड्रायस्पोषाय विष्णुस्त्वान्वेतु सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु-इति सप्तभिः प्रतिमन्त्रं दक्षिणेन पदा प्रक्रमय्य, सप्तमे पदे निहिते "सखा सप्तपदा भव सखायौ सप्तपदा बभूव सख्यं ते गमेयँ सख्यात्ते

मा योषँ सख्यान्मे मा योष्ठास्समयाव सङ्कल्पावहै सम्प्रियौ रोचिष्णू सुमनस्यमानो–इषमूर्जमभिसंवसानो सन्नो मनाँसि संव्रता समुचित्तान्याकरं–सा त्वमस्यमूहममूहमस्मि सा त्वं द्यौरहं पृथिवी त्वँ रेतोऽहँ रेतोभृत्त्वं मनोऽहमस्मि वाक्त्वँ सामाहमस्म्यृक्त्वँ सा मामनुव्रता भव पुँसे पुत्राय वेत्तवै श्रियै पुत्राय वेत्तवा एहि सूनृते"। इति जपित्वा अग्निं प्रदक्षिणं कुर्यात्। सर्वेष्वपि प्रदक्षिणेषु आज्यस्थालीं प्रणीतिमश्मानं लाजांश्चाभ्यन्तरे कृत्वा, दक्षिणतो निषादितस्य ब्राह्मणस्याग्नेश्चान्तरा गच्छेत्, एवं पत्न्या सह प्रदक्षिणं कृत्वा, यथास्थानमुपविश्य, हस्तं मुक्त्वा, पत्न्यान्वारब्धः "सोमाय जनिविदे स्वाहा सोमाय जनिविद इदं। गन्धर्वाय जनिविदे स्वाहा–गन्धर्वाय जनिविद इदं। अग्नये जनिविदे स्वाहा–अग्नये जनिविद इदं। कन्यला पितृभ्यो यती पतिलोकमव दीक्षा मदास्थ स्वाहा–आत्मन इदं। "प्रेतो मुञ्चाति नामुतस्सुबद्धाममुतस्करत् यथेयमिन्द्रमीढ्वः सुपुत्रा सुभगाऽसति स्वाहा–इन्द्राय मीढुष इदं। इमां त्वमिन्द्र मीढ्वस्सुपुत्राँ सुभगां कुरु–दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि–इन्द्राय मीढुष इदं' "अग्निरैतु प्रथमो देवतानाँ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्–तदयँ राजा वरुणोऽनुमन्यतां यथेयँ स्त्री पोत्रमधं न रोदात्स्वाहा–अग्नय इदं। इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः–अशून्योपस्थाजीवतामस्तु माता पौत्रमानन्दमभिप्रबुध्यतामियँ स्वाहा–अग्नय इद। माते गृहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यस्संविशन्तु मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज पश्यन्ती प्रजाँ सुमनस्यमानाँ स्वाहा–अग्नय इदं। द्यौस्ते पृष्ठँ रक्षतु वायुरूरू अश्विनौ च स्तनन्धयन्तं सविताऽभिरक्षतु–आवाससः परिधाना बृहस्पतिः विश्वेदेवा अभिरक्षन्तु पश्चात्स्वाहा–द्यौर्वाय्वश्विसवितृबृहस्पतिविश्वेभ्योदेवेभ्य इदं।

अप्रजस्तां पौत्रमृत्युं पाप्मानमुतवाऽघं-शीर्ष्णस्स्रजमिवोन्मुच्य द्विषद्भ्यः प्रति-मुञ्चामि पाशँ स्वाहा-अग्नय इदं। "इमं मे वरुण श्रुधीहवमद्या च मृडय। त्वामवस्युराचके स्वाहा-वरुणायेदं। तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः-अहेडमानो वरुणेहबोद्ध्युरुशँस मा न आयुः प्रमोषीस्स्वाहा वरुणायेदं। त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवया सिसीष्ठाः-यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत्स्वाहा-अग्नीवरुणाभ्यामिदं। सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो-व्युष्टौ-अव-यक्ष्व नो वरुणँ रराणो वीहि मृडीकँ सुहवो न एधि स्वाहा-अग्नीवरुणाभ्यामिदं। त्वमग्ने अयास्ययासन्मनसा हितः-अयासन् हव्यमूहिषेऽयानो धेहि भेषजँ स्वाहा-अग्नये अयस इदं। अग्नेरुत्तरतोऽश्मानं-"आतिष्ठेममश्मानं अश्मेव त्वँ स्थिरा भव-अभितिष्ठ पृतन्यतस्सहस्व पृतनायतः" इति पत्नीं दक्षिणेन पदास्थाप्य, यथास्थानमुपविश्य, दर्वीवत् पत्न्या अञ्जलिं संस्कृत्य तस्मिन्नुप-स्तीर्य,द्विर्लाजानावपेत्, जमदग्नीनां त्रिः। पत्न्यास्सोदर्यो लाजानावपतीत्येके। अभिघार्य, वध्वञ्जलिं गृहीत्वा, तेन देवतीर्थेन "इयं नार्युपब्रूते कुल्पान्याव-पन्तिका-दीर्घायुरस्तु मे पतिर्जीवातु शरदश्शतँ स्वाहा-अग्नय इदं। तस्या हस्तँ गृहीत्वोत्थाय" तुभ्यमग्रे पर्यवहन्थ्सूर्यां वहतुना सह-पुनः पतिभ्यो जायां दा अग्ने प्रजया सह। पुनः पत्नीमग्निरदादायुषा सहवर्चसा। दीर्घायुरस्या यः पतिस्स एतु शरदश्शतं-विश्वा उत त्वया वयं धारा उदन्या इव-अति गाहेमहि द्विषः"। तया सह अग्निं प्रदक्षिणं कृत्वा, "आतिष्ठेममश्मानं अश्मेव त्वँ स्थिरा भव-अभितिष्ठ पृतन्यतस्सहस्व पृतनायतः"। इति पूर्ववद-श्मानमास्थाप्य, यथास्थानमुपविश्य, अञ्जलावुपस्तीर्य, द्विर्लाजानोप्य, अभिघार्य "अर्यमणं नु देवं कन्या अग्निमयक्षत-स इमां देवो अध्वरः प्रेतो मुञ्चाति

नामुतस्सुबद्धाममुतस्करथ्स्वाहा-अग्नय इदं । तस्या हस्तं गृहीत्वोत्थाय, "तुभ्यमग्रे पर्यवहन्थ्सूर्यां वहतुना सह-पुनः पतिभ्यो जायां दा अग्ने प्रजया सह-पुनः पत्नीमग्निरदादायुषा सहवर्चसा-दीर्घायुरस्या यः पतिर्स एतु शरदश्शतं-विश्वा उत त्वया वयं धारा उदन्या इव । अतिगाहेमहि द्विषः" । पूर्ववत् प्रदक्षिणं अग्निं कृत्वा, "आतिष्ठेममश्मानमश्मेव त्वँ स्थिरा भव-अभितिष्ठ पृतन्यतस्सहस्व पृतनायतः" इति पूर्ववदश्मानमास्थाप्य, यथास्थानमुपविश्य, हस्तं मुक्त्वा, अञ्जलीनुपस्तीर्य, द्विर्लाजानोप्य, अभिघार्य त्वमर्यमा भवसि यत्कनीनां नाम स्वधावथ्स्वर्यं विभर्षि-अञ्जन्ति वृक्षँ-सुधितन्न गोभिर्यद्दम्पती समनसा कृणोषि स्वाहा-अग्नय दं । तुभ्यमग्रे पर्यवहन् पुनः पत्नीमग्निरदात्-विश्वा उत त्वया वयं-इति तिसृभिः पूर्ववत् प्रदक्षिणं कृत्वा, यथास्थानमुपविश्य, जयादि प्रतिपद्यते शम्या अपोह्य, सँस्रावं हुत्वा, प्राणानायम्य, अस्मिन्नुद्वाहहोमकर्मणि मध्ये सम्भावित-प्रायश्चित्तार्थं सर्वप्रायश्चित्तहोमं होष्यामि-प्रायश्चित्ताहुतीः हुत्वा, प्राणानायम्य, परिषिच्य, प्रणीतावोक्षणं ब्रह्मोद्वासनं च कृत्वा, ओं श्रीविष्णवे स्वाहेति पूर्णाहुतीः हुत्वा, "अग्ने नय" इत्यग्निमुपस्थाय, प्रणम्याभिवाद्य, "प्रत्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाबध्नाथ्सविता सुकेतः-धातुश्च योनौ सुकृतस्य लोके स्योनं ते सह पत्या करोमि-इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुशेवः-धातुश्च योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या कृणोमि"। इति योक्त्रं विमुच्य, पश्चान्निरस्याप उपस्पृशेत् । एतमेवाग्निं यावज्जीवं धारयेत् । एतस्मिन्नग्नौ "यदतेचिदितिहोमप्रविश्यहोमसर्वस्थाली-पाकशेषहोमपुंसवनसीमन्तगृहप्रवेशपार्वणपिण्डपितृयज्ञौपासनवैश्वदेवपञ्चमहायज्ञा-दीनि कुर्यात् । सदस्यान् सम्पूजयेत् ॥

## ॥ उत्तम्भनादिमन्त्रजपः ॥

वरः प्राणानायम्य, उत्तम्भनादिमन्त्रजपं करिष्य इति सङ्कल्प्य, “सत्येनोत्तभिता भूमिस्सूर्येणोत्तभिता द्यौः । ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधिश्रितः । युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः–रोचन्ते रोचना दिवि-योगे योगे तवस्तरं वाजे वाजे हवामहे–सखाय इन्द्र मूतये–सुकिँ शुकँ शल्मलि विश्वरूपँ हिरण्यवर्णं सुवृतँ सुचक्रं–आरोह वध्वमृतस्य लोकँ स्योनं पत्ये वहतुं कृणुष्व–उदुत्तरमारोहन्ती व्यस्यन्ती पृतन्यतः–मूर्धानं पत्युरारोह प्रजया च विराड् भव । संराज्ञी श्वशुरे भव संराज्ञी श्वश्र्वां भव-ननान्दरि संराज्ञी भव संराज्ञी अधिदेवृषु–स्नुषाणाँ श्वशुराणां प्रजायाश्च धनस्य च–पतीनां च देवृँणां च सजातानां विराड् भव–नीललोहिते भवतः कृत्या सक्तिर्व्यज्यते एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यते । ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु–पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः–माविदन्परि पन्थिनो य आसीदन्ति दम्पती–सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः–सुगं पन्थानमारुक्ष-मरिष्टँ स्वस्तिवाहनं–यस्मिन्वीरो नरिष्यत्यन्येषां विन्दते वसु–ता मन्दसाना मनुषो दुरोण आधत्तँ रयिं दशवीरं वचस्यवे–कृतं तीर्थं सुप्रपाणँ शुभस्पती स्थाणुं पथेष्ठामपदुर्मतिँ हतं-अयं नो मह्याः पारँ स्वस्ति नेषद्वनस्पतिः–सीरा नस्सुता भव दीर्घायुत्वाय वर्चसे–अस्य पारे निरृथस्य जीवा ज्योतिरशीमहि–मह्या इन्द्र स्वस्तये । इति जपित्वा—

### –यद्दादिहोमः–

श्मशानादिव्यतिक्रमे भाण्डे रथे वारिष्ठे प्राणानायम्य, यद्दादिहोमं करिष्य इति सङ्कल्प्य, अग्निप्रतिष्ठाद्याज्यभागान्ते पत्न्या अन्वारब्धः “यद्दते

चिदमिश्रिषः पुरा जर्तृभ्य आतृदः-सन्धाता सन्धिं मघवा पुरोवसुर्निष्पर्ता-विदतं पुनः स्वाहा-मघवत इदं। इडामग्ने पुरुदँ सँसनिं गोश्शश्वत्तमँ हवमानाय साध-स्यान्नस्सूनुस्तनयो विजावाग्ने साते सुमतिर्भूत्वस्मे स्वाहा-अग्नय इदं। इमं मे वरुण श्रुधीहवं अद्या च मृडय-त्वामवस्युराचके स्वाहा वरुणायेदं। तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशँस मा न आयुः प्रमोषीः स्वहा-वरुणायेदं। त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवया सिसीष्ठाः-यजिष्ठो वह्नितम-श्शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत्स्वाहा-अग्नीवरुणाभ्यामिदं। सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ-अव यक्ष्व नो वरुणँ रराणो वीहि मृडीकँ सुहवो न एधि स्वाहा-अग्नीवरुणाभ्यामिदं। त्वमग्ने अयासि अयासन् मनसा हितः-अयासन् हव्यमूहिषेऽयानो धेहि भेषजँ स्वाहा-अग्नये अयस इदं। जयादि प्रतिपद्यते। परिषेचनान्तं कृत्वा, प्रणीतावोक्षणं ब्रह्मोद्वासनं-अग्ने नयेत्यग्न्युपस्थानं कुर्यात्। निमित्ताभावेऽपि प्राणानायम्य, यदृतादिमन्त्रजपं करिष्य इति सङ्कल्प्य, यदृतादिजपं वा कुर्यात्। क्षीरिणा-मन्येषां वा लक्ष्मण्यानां वृक्षाणां नदीनां धन्वनां च व्यतिक्रमे उत्तरैः यथा-लिङ्गं जपेत्। "ये गन्धर्वा अप्सरसश्च देवीरेषु वृक्षेषु वानस्पत्येष्वासते-शिवास्ते अस्यै वध्वै भवन्तु माहिँसिषुर्वहतुमूह्यमानां-या ओषधयो या नद्यो यानि धन्वानि ये वना-ते त्वावधु प्रजावतीं प्रत्वे मुञ्चत्वँहसः॥

-अथ प्रविश्यहोमारम्भः-

सङ्काशयामि, वहतुं ब्रह्मणा गृहैरघोरेण चक्षुषा मैत्रेण-पर्याणद्ध विश्वरूपं यदस्याँ स्योनं पतिभ्यस्सविता कृणोतु तत्"। इति स्वगृहं पत्न्या-

स्सन्दर्शयेत् । "आवामगन्थ्सुमतिर्वाजिनी वसून्यश्विना हृत्सुकामाँ अयँसत-अभूतगोपा मिथिना शुभस्पती प्रिया अर्यम्णो दुर्याँ अशीमहि–अयन्नो देव-स्सविता बृहस्पतिरिन्द्राग्नी मित्रा वरुणा स्वस्तये–त्वष्टा विष्णुः प्रजया सँरराणः काम आयातं कामाय त्वा विमुञ्चतु" इति द्वाभ्यां दक्षिणवामयोः क्रमेण वाहौ विमुच्य, गृहं प्रविश्य, "शर्म वर्मेदमाहरास्यै नार्यां उपस्तिरे–सिनीवालि प्रगायतां इयं भगस्य सुमता असत्–गृहान् भद्रान् प्रपद्येऽवीरघ्नी वीरवतस्सुवीरान् इरां वहतो घृतमुक्षमाणास्तेष्वहँ सुमनास्संविशामि इति अगारस्य मध्ये लोहितमानडुहं चर्म प्राक्छिर उत्तरलोमास्तीर्य, दक्षिणपादनिधानपूर्वकं पत्नीं गृहं प्रवेशयेत् । उभावपि पादेन देहलीं न स्पृशेताम । गृहे उत्तरपूर्वदेशे दर्भेष्वासीनो दर्भान् धारयमाणः पत्न्या सह पवित्रपाणिः प्राणानायम्य, प्रविश्यहोमं करिष्य इति सङ्कल्प्य, अग्निप्रतिष्ठाद्याज्यभागान्ते पत्न्यान्वारब्धः "आगन्गोष्ठं महिषी गोभिरश्वैरायुष्मत्पत्नी प्रजया स्वर्वित्–बह्वीं प्रजां जनयन्ती सुरत्नेममग्निँ शतहिमास्सपर्यात्स्वाहा अग्नये गृहपतय इदं । अयमग्निर्गृहपतिस्सुसँ सत्पुष्टि वर्धनः–यथा भगस्याभ्यां ददद्रयिं पुष्टिमथो प्रजाँ स्वाहा अग्नये गृहपतय इदम् । प्रजाया आभ्यां प्रजापत इन्द्राग्नी शर्म यच्छतन् यथैनयोर्न प्रमीयाता उभयोर्जीवतोः प्रजा स्वाहा–प्रजापतीन्द्राग्निभ्यामिदं । "तेन भूतेन हविषाऽयमाप्यायतां पुनः–जायां यामस्मा आवाक्षुस्ताँरसेनाभिवर्धताँ स्वाहा इन्द्राग्निभ्यामिदं । "अभिवर्धतां पयसाभिराष्ट्रेण वर्धतां–रय्या सहस्रपोषसेमौ स्तामनपेक्षितौ स्वाहा–इन्द्राग्निभ्यामिदं" । इहैवस्तं मा वियोष्टं विश्वमायुर्व्यश्नुतं–मह्या इन्द्रस्स्वस्तये स्वाहा–इन्द्राग्निभ्यामिदं । ध्रुवैधि पोष्या मयि मह्यन्त्वादाद्बृहस्पतिः–मया पत्या प्रजावती सञ्जीव शरदश्शतँ स्वाहा–बृहस्पतय इदं । "त्वष्टा जायामजनयत्त्वष्टाऽस्यै त्वां पतिं–त्वष्टा सहस्रमायूँषि

दीर्घमायुः कृणोतु वाँ स्वाहा–त्वष्ट्र इदं। "इमं मे वरुण श्रुधीहवमद्या च मृडय–त्वामवस्युराचके स्वाहा–वरुणायेदं। तत्त्वायामि ब्रह्मणा वन्दमानस्त–दाशास्ते यजमानो हविर्भिः–अहेडमानो वरुणेह बोध्युरुशँस मा न आयुः प्रमोषीः स्वाहा–वरुणायेदं। त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽ-वया सिसीष्ठाः–यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषाँसि प्रमुमुग्ध्यस्मत्स्वाहा अग्नीवरुणाभ्यामिदं। स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ–अव यक्ष्व नो वरुणॅ रराणो वीहि मृडीकँ सुहवो न एधि स्वाहा·अग्नी·वरुणाभ्यामिदं। त्वमग्ने अयास्ययासन्मनसाहितः–अयासन्हव्यमूहिषेऽयानो धेहिं भेषजँ स्वाहा–अग्नये अयस इद। जयादि, शम्या अपोह्य, सँस्रावः प्रायश्चित्तं, प्राणायामः, प्रणीतावोक्षणं, ब्रह्मोद्वासनं, कुर्यात्. पूर्वास्तृते चर्मणि "इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः। इहो सहस्रदक्षिणो रायस्पोषो निषीदतु"। इत्युपविशेतां, सर्वत्रोपवेशने दक्षिणतः पत्नी उत्तरतो वरः। अथ यस्याः पुत्रा एव जायन्ते जातास्सर्वेऽपि जीवन्ति तस्याः पुत्रं "सोमेना-दित्या बलिनस्सोमेन पृथिवी दृढा–अथो नक्षत्राणामेषामुपस्थे सोम आधितः इति पत्न्यङ्के निवेश्य, "प्रस्वस्स्थः प्रेयं प्रजया भुवने शोचेष्ट-इति तस्मै कुमाराय कदल्यादिफलानि दत्वा, इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्ह-पत्याय जागृहि–एनापत्या तन्वँ सँसृजस्वाथा जीव्री विदथमावदासि–सुमङ्ग-लीरियं वधूरिमाँ समेत पश्यत–सौभाग्यमस्यै दत्वायाथास्तं विपरेतन –इति जपित्वा, उभौ वाच यच्छतः। आनक्षत्रोदयादुदितेषु नक्षत्रेषु प्राचीमुदीचीं वादिशमुपनिष्क्रम्य, "ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवतस्थित– त्वन्नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः" इति ध्रुवं "सप्तर्षयः प्रथमां कृत्तिकानामरु धतं यद्ध्रुवताँ ह निन्युष्षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकमेधत्वष्टमी" इत्यरुन्धतीं च क्रमेण दर्शयित्वा, तया सहोपविशेत्।

—आग्नेयस्थालीपाकः—

ब्राह्मणाननुज्ञाप्य, प्राणानायम्य, पत्न्या सह आग्नेयस्थालीपाकेन यक्ष्य इति सङ्कल्प्य, पत्न्यर्थं पुनः प्राणानायम्य, आग्नेयस्थालीपाकेन यक्ष्य इति पत्नीं वाचयेत्। पत्नी व्रीहीनवहन्यात्। तस्मिन्नेवाग्नौ स्वयं चरुं श्रपयित्वाभिघार्य, उत्तरतोऽवतार्य, पुनरभिघार्य, अग्निप्रतिष्ठाद्यग्निमुखान्ते पत्न्यान्वारब्धो दर्व्यामुपस्तीर्य, हविर्मध्याददङ्गुष्ठपर्वमात्रं मध्यमानामिकाङ्गुष्ठैः द्विरवदाय, जमदग्नीनां त्रिः सकृदभिघार्य, चरौ प्रत्यभिघार्य, अग्नये स्वाहेत्यग्निमध्ये हुत्वा, अग्नय इदं। दर्व्यामुपस्तीर्य, आर्द्रामलकमात्रमुत्तरार्धात्सकृदवदाय, जमदग्नीनां द्विरवदाय, सर्वेषां द्विरभिघार्य, अग्नये स्विष्टकृते स्वाहेति प्रागुदीच्यां पूर्वाहुत्यसंसक्तं हुत्वा, परिध्यञ्जनं, लेपकार्यं, आज्यस्थालीमुत्तरतः, प्रधानदर्वीं दक्षिणतः, इतरां मध्ये, इत्यग्नेः पश्चान्निधाय, पात्रासादनदर्भानादाय, प्रधानदर्व्यामग्रं, इतरदर्व्यां मध्यं, आज्यस्थाल्यां मूलं, इति क्रमेण त्रिरक्त्वा, तेष्वेकं दर्भं प्रज्ञातं निधाय, दक्षिणोत्तराभ्यां पाणिभ्यां दर्व्यौ प्रतिष्ठाप्य, सव्यं करं निरस्य तिर्यञ्चं हस्तं धारयन्, अग्रमुदत्याग्नौ प्रहृत्य, पुनरुदत्य, मध्यं प्रहृत्य, पुनरुदस्य, मूलं प्रहृत्य, निहितं दर्भं च प्रहृत्य, तर्जन्या त्रिरग्निं निर्दिश्य, अग्निमभिमन्त्र्य, दक्षिणहस्तेन भूमिं स्पृष्ट्वा, मध्यमं परिधिमग्नौ प्रहृत्य, अग्नौ हस्ताभ्यां युगपदादाय, अग्नावुत्तरार्धस्याङ्गारेषु अग्रं प्रवेश्य, प्रहृत्य, सँस्रावहोमादि कुर्यात्। एवं सर्वत्र चरुकर्मसु परिध्यञ्जनादि लेपकार्यं परिधिप्रहरणं सँस्रावः प्रायश्चित्तं प्राणायामः परिषेचनं प्रणीतावोक्षणं ब्रह्मोद्वासनं च कुर्यात्। बह्वाज्यसिक्तेन हुतशेषेण चरुणा दक्षिणतो निषादितं ब्राह्मणं भोजयित्वा, प्राणानायम्य, आग्नेयस्थालीपाककर्माङ्गं वृषभदानं करिष्य इति सङ्कल्प्य, पूज्याय ब्राह्मणाय वृषभं दत्वा, प्राणानायम्य, पूर्णपात्रदानं करिष्य

*इति सङ्कल्प्य, तण्डलपूर्णं पात्रं दरिद्राय कुटुम्बिने श्रोत्रियाय दद्यात् ।*

—औपासनारम्भः

रात्रौ नवसु घटिकासु औपासनमारभेत, नव घटिका अतीताश्चेत् श्वस्सायं संध्यानन्तरं ब्राह्मणाननुज्ञाप्य, पत्न्या सह प्राणानायम्य, औपासनमारप्स्य—इति सङ्कल्प्य, सायमौपासनहोमं होष्यामीति पुनस्सङ्कल्प्य, स्थण्डिलादि परिस्तरणान्तं कृत्वा, परिषिच्य, एकां समिधमाधाय, द्वादशपर्वपूरितं प्रोक्षितं तण्डुलं अग्नये स्वाहेति हस्तेन देवतीर्थेन अग्निमध्ये हुत्वा, किञ्चिदधिकभागं अग्नये स्विष्टकृते स्वाहेति—अग्नावुत्तरपूर्वे पूर्ववद्धुत्वा पुनरेकां समिधमाधाय, परिषिच्य, अग्ने नयेत्यग्निमुपतिष्ठेत् ॥

—गन्धर्वः—

नैयग्रोधौदुम्बराश्वत्थप्लाक्षेषु अन्यतमदण्डं गन्धपुष्पालङ्कृतं वाससा सूत्रेण वा परिवेष्टितं निधाय, तस्मिन् विश्वावसुगन्धर्वमावाह्य, अभ्यर्च्य, दम्पत्योः शयनकटे तयोर्मध्ये निदद्ध्यात् ।

अथ शेषहोमः

चतुर्थ्यां रात्र्यामन्त्ययामे शेषहोमं कर्तुं ब्राह्मणाननुज्ञाप्य, विष्वक्सेनं सम्पूज्य, तं गन्धर्वं दण्डमुत्थाप्य, सम्पूज्य, "उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा—अन्यामिच्छ प्रफर्व्यं सं जायां पत्या सृज । उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीट्टे—अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि" इति तं दण्डं प्रक्षाल्य, निधाय, प्राणानायम्य, विवाहहोमादूर्ध्वं एतत्क्षणपर्यन्तं क्षारलवणाद्यवर्जनादिव्रतलोपप्रायश्चित्तार्थं प्राजापत्यकृच्छ्राणि कृत्वा, प्राणानायम्य, आवयोः विवाहशेषहोमं करिष्य इति सङ्कल्प्य,

अग्निप्रतिष्ठाद्याज्यभागान्ते पत्न्यान्वारब्धः "अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा—अग्नय इदं। वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा वायव इदं। आदित्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा—आदित्यायेदं। प्रजापते प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये याऽस्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्मिघ्नी जारघ्नीमस्यै तां कृणोमि स्वाहा—प्रजापतय इदं। प्रसवश्चोपयामश्च काटश्चार्णवश्च धर्णसिश्च द्रविणं च भगश्चान्तरिक्षं च सिन्धुश्च समुद्रश्च सरस्वाँश्च विश्वव्यचाश्च ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः स्वाहा—प्रसवादिभ्य इदं। मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः स्वाहा—मध्वादिभ्य इदं। चित्तं च चित्तिश्चाकूतं चाकूतिश्चाधीतं चाधीतिश्च विज्ञातं च विज्ञानं च नाम च क्रतुश्च दर्शश्च पूर्णमासश्च ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः स्वाहा चित्तादिभ्य इदं। जयादि होमं कृत्वा, शम्या अपोह्य, सँस्रावः प्रायश्चित्तं प्राणायामः परिषेचनं प्रणीताप्रोक्षणं ब्रह्मोद्वासनं अग्न्युपस्थानं कृत्वा, अग्नेः पश्चात् प्राङ्मुखीं पत्नीं उपवेश्य, तस्याः शिरसि हुतशेषमाज्यं दर्व्यामादाय, "भूः स्वाहा-भुवः स्वाहा—सुवः स्वाहा—ओं स्वाहेति निनयेत्, "अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतं—इह

प्रजामिह रयिँ, रराणः प्रजायस्व प्रजया पुत्रकाम" इति पत्नी पतिं समीक्षेत। अपश्यं त्वा मनसा दीध्यानाँ स्वायां तनूँ ऋत्विये नाथमानां–उप मामुच्चा युवतिर्बुभूयाः प्रजायस्व प्रजया पुत्रकामे इति पतिः पत्नीं समीक्षेत। आज्याभ्यक्ताभ्यां अङ्गुष्ठानामिकाभ्यां "समञ्जन्तु विश्वे देवास्समापो हृदयानि नौ–सं मातरिश्वा संधाता समुदेष्ट्री दिदेष्टु नौ–इति तयोर्हृदयदेशौ युगपत्सम्मृज्य, "प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिस्सहसाम इन्द्र–विश्वैर्देवैरातिभिः सँरराणः पुंसां बहूनां मातरस्स्याम–आनः प्रजां जनयतु प्राजापतिराजरसाय समनक्त्वर्यमा–अदुर्मङ्गलीः पतिलोकमाविश शन्न एधि द्विपदे शञ्चतुष्पदे–तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या वपन्ति–या न ऊरू उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम्" इति जपेत्। प्राणानायम्य, फलदानताम्बूलदानानि करिष्ये इति सङ्कल्प्य, दत्वा, ब्राह्मणाननुज्ञाप्य, ताम्बूलचर्वण कृत्वा, सन्ध्यां प्रातरौपासनं च कृत्वा, अभ्युदयं पुण्याहं च कृत्वा, ब्रह्मादीन् सम्पूज्य, आवाहनमन्त्रैरेव ब्रह्मादिदेवता उद्वासयेत्। महदाशीर्वादं कारयेत्। सायं बन्धनमन्त्रैरेव प्रतिसरसूत्रं विसृज्य परित्यजेत। तमग्निमेव धारयेत्। अथवा आत्मसमारोपणं वा कुर्यात्॥

## –समावेशनम्–

तद्रात्रावन्यस्यां वा रात्रौ उपलिप्तं गन्धपुष्पधूपवासितं घृतदीपादीपितं स्वास्तरणतल्पसंयुक्त गृहं पत्न्या सह प्रविश्य, प्राणानायम्य, समावेशन करिष्ये इति सङ्कल्प्य॥

## –समावेशनमन्त्र–

"आरोहोरुमुपबर्हस्व बाहुं परिष्वजस्व जायाँ सुमनस्यमानः–तस्यां

पुष्यतं मिथुनौ सयोनी बह्वीं प्रजां जनयन्तौ सरेतसा-आर्द्रयारण्या सत्रा-मन्थत्पुरुषं पुरुषेण शक्रः-तदेतौ मिथुनौ सयोनी प्रजयाऽमृतेनेह गच्छत-अहं गर्भमदधामोषधीषु अहं विश्वेषु भुवनेष्वन्तः-अहं प्रजा अजनयं पितृणामहं जरिभ्यो अवरीषु पुत्रान्-पुत्रिणे मा कुमारिणा विश्वमायुर्व्यश्नुतं-उभा-हिरण्यपेशसा वीतिहोत्रा कृतद्वसू-दशस्यं त्वाऽमृताय कँशमूयो रोमशँहयो देवेषु कृणुतो दुवः-इति जपित्वा, तया सह संविशेत् । विवाहान्ते समावेशना-करणे गर्भाधानात्पूर्वं समावेशनं जपित्वा, गर्भाधानमन्त्रं जपित्वा, गर्भाधानं कुर्यात ॥

## ॥ कन्याया रजोदर्शने कर्तव्यम् ॥

विवाहे सोमाय जनिविदे स्वाहेति होमात्पूर्वं कन्यायां रजस्वलायां "आपो अस्मान्मातरश्शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्प्रवहन्तु रिप्रमुदाभ्यश्शुचिरा पूत एमि" इति यजुः पवित्रेण पुरुषसूक्तपञ्चश.न्तिअब्लिङ्ग-गायत्रीपवमानैश्च अभिमन्त्रितजलेन तां स्नापयित्वा, अन्यद्वस्त्रं परिधाप्य तस्मिन्नेवाग्नौ समस्ताभिः व्याहृतिभिः "सप्त ते अग्ने, यन्म आत्मनो मिन्दा, पुनरग्निरित्येतैः "भूरग्नये, भूरन्नमग्नये, भूरग्नये चेत्यनुवाकत्रयेण प्रतिस्वाहा-कारं "तन्तुन्तन्वन्" इत्येतया व्यस्ताभिः व्याहृतिभिः "अनाज्ञातमित्यादिभिश्च हुत्वा, ब्राह्मणाननुज्ञाप्य, तन्त्रशेषं समापयेत् । प्रधानहोमात्परं रजोदर्शने चतुर्थेऽहनि स्नानब्रह्मकूर्चप्राशनपुनःस्नानादि कारयित्वा, तन्त्रशेषं समापयेत् ॥

दम्पतीनियमपुनर्विवाहपुनरुपनयनवैदिकाग्निद्वयसंसर्गवैदिकलौकिकाग्नि-द्वयसंसर्गज्येष्ठभार्याग्निकनिष्ठभार्याग्निविभागाग्नौ जलबिन्दुपतनादि कूर्चपरिधि-परिस्तरणादिदाहगृहप्रारम्भगृहप्रवेशप्रभृतीनां चत्वारिंशत्संस्कारानन्तर्गतत्वेन प्रति

पुरुषमवश्यमनुष्ठेयत्वेन नैमित्तिकत्वेन तेषां चन्द्रिकाकृद्भिः स्पष्टतया उक्तत्वेन च नात्र तेषामनुक्रमणिका कृता ॥

चन्द्रिकाकृद्भागिनेयपुत्रेण वल्लीपुरवंश्येन रामानुजदीक्षितसूनुना श्रीनिवासेन यथामति विरचिता, चन्द्रिकानुसारिण्यनुक्रमणिका सम्पूर्णा ॥

हरिः ओम्

श्रीमते रामचन्द्राय नमः

–पालाशहोम–

केचित् पालाशहोमकर्म कुर्वन्ति–तदुच्यते ॥

चतुर्थेऽहनि अन्नसंस्कारेण अन्नं संस्कृत्य आचार्येण सह प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य पूर्वेणोत्तरेण पालाशं त्रीण्युदगपवर्गाणि स्थण्डिलानि कल्पयित्वा तेषु यथाक्रमं प्रणवश्रद्धामेधाभ्योऽर्घ्यपाद्यादिगन्धमाल्यधूपदीपनैवेद्यादि-दत्वा–"यश्छन्दसामि"त्यनेन "श्रुतं मे गोपाये"त्यन्तेन मन्त्रेण प्रणवमुपतिष्ठते श्रद्धयाग्निस्समिध्यत इति सूक्तेन श्रद्धां मेधां ते देवस्सविता इत्यनुवाकेन मेधां ततः पालाशदण्डमूले दण्डं विसृज्यान्यमादत्ते, अथाचार्यः पूर्ववास आदत्ते, अथ बलिशेषमाचार्यः पुरोगान् ब्राह्मणान् भोजयेत, आचार्येणानुज्ञातः स्वयं भुञ्जीत, अथाचार्येण सहाचार्यगृहं गच्छति । ब्राह्मणभोजनं-अभ्युदयमित्यर्थः ॥

–शुभमस्तु–



# शोधनिका

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्ति |
|---|---|---|---|
| प्रयोचन्द्रिका | प्रयोगचन्द्रिका | 2 | 1 |
| त्रयोः | द्वयोः | 3 | 5 |
| मन्त्रज्ञाने | मन्त्राज्ञाने | 3 | 13 |
| रलकृत्य | रलङ्कृत्य | 4 | 8 |
| र्वादर्भैः | दूर्वादर्भैः | 4 | 8 |
| पच्छार्धर्चे | पच्छोर्धर्चे | 4 | 10 |
| इत्यनुवाकौ | इत्यनुवाकौ | 5 | 1 |
| सम्भृत्य | सम्भृत्य | 5 | 15 |
| गन्ध | गन्ध | 6 | 10 |
| मुद्गलित | मुद्गतिल | 6 | 13 |
| अभिमन्त्र्य | अभिमन्त्र्य | 6 | 14 |
| उन्मृज्य | उन्मृज्य | 7 | 17 |
| ब्ध हन्सामेति | बृहत्सामेति | 7 | 18 |
| धृत | घृत | 7 | 18 |
| विशेत्तातेति | विश्वेत्तातेति | 7 | 19 |
| आमुककर्माङ्गं | अमुककर्माङ्गं | 8 | 6 |
| ऊध्वाग्रं | ऊर्ध्वाग्रं | 9 | 3 |
| प्रयोचन्द्रिका | प्रयोगचन्द्रिका | 10 | 1 |
| स्याल्यौ | स्थाल्यौ | 10 | 9 |
| दरत्निमात्रं | दरत्निमात्रम् | 10 | 10 |
| राष्ट्रभृद्भिः | राष्ट्रभृद्भिः | 12 | 8 |
| ङ्गारवग्रं | ङ्गारेष्वग्रं | 12 | 12 |
| प्रजां मे धरयत | प्रजां मे धारयत | 13 | 15 |
| दष्टसूत्रेण | दषसूत्रेण | 15 | 2 |
| प्रयोचन्द्रिका | प्रयोगचन्द्रिका | 16 | 1 |
| उ—षाढ | उत्तराषाढ | 16 | 6 |
| लीकरण | फलीकरण | 16 | 20 |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| मचयत | मर्चयता | 18 | 6 |
| शुभदयं | शुभद्वयं | 19 | 2 |
| विवाहानन्त | विवाहानन्तरं | 19 | 3 |
| प्रतिसंशानं | प्रतिसंशासनम् | 22 | 6 |
| दादामीति | ददामीति | 22 | 11 |
| हस्तोर्ध्वे | हस्तोर्ध्वे | 23 | 10 |
| प्रणवव्याहृभिः | प्रणवव्याहृतिभिः | 23 | 11 |
| कर्मणां | कर्मणा | 26 | 3 |
| वित्र्वेदेव | विश्वेदेव | 27 | 15 |
| तत्रेव | तत्रैव | 28 | 3 |
| वेणवं | वैणवं | 29 | 12 |
| षड्दि | षड्दिश | 29 | 14 |
| बरस्तण्डुल | वरस्तण्डुल | 32 | 12 |
| अन्यान्य | अन्योन्य | 32 | 12 |
| जीवं | जीवा | 32 | 19 |
| पश्चादुदग्रं | पश्चादुदगग्रं | 33 | 7 |
| गृह्णामि | गृभ्णामि | 33 | 11 |
| व्यवस्तर्य | व्यवस्तीर्य | 34 | 17 |
| गोष्ठामिति | गोष्ठमिति | 35 | 14 |
| दर्व्यां | दर्व्यां | 36 | 10 |
| आरयन् | धारयन् | 36 | 12 |
| शेषहोमा | शेषहोमः | 37 | 13 |
| मौठ्य | मौढ्य | 39 | 1 |
| प्रश्नीयात् | प्राश्नीयात् | 39 | 13 |
| तद्ग्राल्याद्यैः | तद्भ्रात्राद्यैः | 40 | 10 |
| स्थालीं | स्थाली | 40 | 14 |
| धार्यास्निनाशे | धार्याग्निनाशे | 41 | 11 |
| पादकुच्छ्रं | पादकृच्छ्रं | 41 | 16 |
| विवचये | विविचये | 41 | 21 |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| विवचये | विविचये | 42 | 1 |
| लौकिकाग्नो | लौकिकाग्नौ | 42 | 8 |
| पार्श्वस्याभ्यां | पार्श्वस्थाभ्यां | 42 | 9 |
| द्वयारग्न्योः | द्वयोरग्न्योः | 43 | 7 |
| अग्नि | अग्निं | 44 | 2 |
| तमग्नि | तमग्निं | 44 | 2 |
| भाष्याकाराणां | भाष्यकाराणां | 45 | 5 |
| सम्पूर्णा | सम्पूर्णा | 45 | 8 |
| प्रयोगचन्द्रिका | अनुक्रमणिका | 46 | 1 |
| नामकरंणा | नामकरणा | 46 | 3 |
| अपोहिष्ठा | आपोहिष्ठा | 46 | 14 |
| जुहुथात् | जुहुयात् | 48 | 2 |
| | "स्वाः" अपाकरणीयम् | 48 | 3 |
| आवर्तस्व | आवर्तस्व | 48 | 4 |
| कृधि | कृधि | 48 | 16 |
| पिन्वस्य | पिन्वस्व | 48 | 19 |
| हु | हेडो | 48 | 22 |
| भवोती | भवोती | 49 | 2 |
| अदितये स्वाहा | अदितये स्याम स्वाहा | 49 | 6 |
| प्रयोगचन्द्रिका | अनुक्रमणिका | 50 | 1 |
| तेषामशेषेण | तेषामशेषाणां | 50 | 13 |
| प्रयोगचन्द्रिका | अनुक्रमणिका | 52 | 1 |
| गर्भामाधत्स्व | गर्भमाधत्स्व | 53 | 9 |
| योनिमेतु बाण | योनिमेतु पुमान् बाण | 53 | 15 |
| इदं हिरण्यं | इति हिरण्यं | 54 | 7 |
| बूयः | ब्रूयुः | 55 | 6 |
| ऊर्ज | ऊर्जे | 56 | 12 |
| वय स्याम | वयँ स्याम | 57 | 6 |
| घृतश्च्युतः | घृतश्चुतः | 57 | 16 |
| बावात | बावाता | 58 | 13 |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| अर्हन्तिक | अर्हन्निष्कँ | 60 | 12 |
| त्रि | त्रिः | 63 | 4 |
| पुंसवनेत | पुंसुवनेन | 64 | 14 |
| मिथ्यमूल | मिधममूल | 66 | 6 |
| यदा | यदी | 67 | 12 |
| सुयय | सूर्याय | 68 | 20 |
| पुँसवन | पुँसुवन | 70 | 7 |
| स्ववशे | स्वे वशे | 72 | 7 |
| पृथिबी इमे | पृथिवी उमे इमे | 73 | 1 |
| मुवः स्वाहा | भुवः स्वाहा | 73 | 7 |
| पिता मता च | पिता माता च | 74 | 19 |
| इत्यृचं | इत्यृचा | 77 | 16 |
| नम | नमः | 78 | 6 |
| सरः | सराः | 79 | 4 |
| यस्म चाहं | यस्मै चाहं | 79 | 17 |
| समैतु | समेतु | 80 | 16 |
| सन्त्वमुकशर्मन् | सन्त्वनमीवास्त आप ओषधय-स्सन्त्वमुकशर्मन् | 80 | 11 |
| पश्चाति सूर्यँ | पश्याति सूर्यम् | 82 | 15 |
| अँशस्ते | अँशुस्ते | 84 | 21 |
| आयुषे कृथि | आयुषे वर्चसे कृधि | 85 | 22 |
| इदं मे | इमं मे | 86 | 9 |
| त्वँ सुश्रवो | त्वँ सुश्रवः सुश्रवो | 87 | 19 |
| अन्य आत्मन | यन्म आत्मन | 88 | 6 |
| ज्योक्च | ज्योवच | 88 | 12 |
| हक्षिणं | दक्षिणं | 88 | 15 |
| सहर्पभिः | सहर्षिभिः | 89 | 5 |
| तच्छकयं | तच्छ्रेयं | 93 | 8 |
| दुर्यान्धस्स्वाहा | दुर्यान् स्वाहा | 94 | 15 |
| असम... मरवः | असम्मरवः | 96 | 8 |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| भूयास्म प्रतिष्टाय | भूयास्म मा प्रतिष्ठाया | 96 | 17 |
| अग्मिुद | अग्निमुद | 98 | 20 |
| आदित्य व्रतपते | अग्ने व्रतपते | 99 | 21 |
| अग्ने व्रतपते | आदित्य व्रतपते | 100 | 1 |
| स्वाहा अग्ने | स्वाहा अग्नय इदम् अग्ने | 100 | 18 |
| अनमित्रा | अनग्नित्रा | 100 | 18 |
| करिप्यामाणः | करिष्यमाणः | 103 | 20 |
| मध्यन्धिने | मध्यन्दिने | 103 | 22 |
| वासिनं | वासितं | 104 | 21 |
| अप्सरस्सु यो | अप्सरस्सु च यो | 104 | 21 |
| संव्ययस्त्वायुष्मान् | संव्ययन्त्वायुष्मान् | 105 | 10 |
| भूरोषीना | भूरोषधीना | 105 | 15 |
| तन्मे | यन्मे | 106 | 12 |
| कान्याहस्ते | कन्याहस्ते | 108 | 3 |
| शर्माणे | शर्मणे | 108 | 22 |
| ब्राह्मणेभ्यः | ब्राह्मणो ब्राह्मणेभ्यः | 111 | 5 |
| आपँ स्योना | आपश्शँ स्योना | 112 | 14 |
| अवचीनेन | अवाचीनेन | 113 | 11 |
| सुभगाऽसति | सुभगा सति | 114 | 12 |
| कृधि इन्द्राय | कृधि स्वाहा इन्द्राय | 114 | 14 |
| निष्पर्ता | निष्कर्ता | 118 | 1 |
| विदतं | विदुतं | 118 | 2 |
| मिथिना | मिथुना | 119 | 2 |
| प्रगायतां | प्रजायतां | 119 | 6 |
| असत् | वसत् | 119 | 3 |
| भद्रान् प्रपद्ये | भद्रान् सुमनसः प्रपद्ये | 119 | 6 |
| तस्मिन्नेवात्र्नो | तस्मिन्नेवात्र्नो | 121 | 4 |
| पर्वमात्र | पर्वमात्रं | 121 | 6 |
| रुदस्य | रुदत्य | 121 | 14 |

| | | | |
|---|---|---|---|
| घटिकसु | घटिकासु | 122 | 3 |
| प्राजापति | प्रजापति | 124 | 7 |
| समात्रेशतमन्त्र | समावेशनमन्त्रः | 124 | 20 |
| मूले दण्ड | मूले दण्डं | 126 | 14 |
| आयाचार्यः | अयाचार्यः | 126 | 14 |

—o—